SRI HARSHA'S

# NAISHADHA.

WITH

## The Commentary of Mallinatha

—o—

PART I. (SARGAS I-VI.)

REVISED AND EDITED WITH FOOT-NOTES BY

Pandit K. L. V. SASTRI,

Mahopadhyaya, Siromani, Sahityanipuna and proficient in Indo-European Philology.

—o—

WITH A FOREWORD BY

Mahamahopadhyaya, Vidyavacaspati

S. KUPPUSWAMI SASTRI, M.A., I.E.S.,

PROFESSOR OF SANSKRIT AND COMPARATIVE PHILOLOGY.

PUBLISHED BY

R. SUBRAHMANYA VADHYAR

BOOK-SELLER & PUBLISHER

KALPATHI—PALGHAT.

—

Third Edition] 1930. 

॥ श्रीरस्तु ॥

महाकविश्रीहर्षप्रणीतं

# ॥ नैषधकाव्यरत्नम् ॥

पदवाक्यप्रमाणपारावारपारीण श्रीमहामहोपाध्यायकोलाचल-
मल्लिनाथसूरिविरचित-जीवातुसमाख्यव्याख्यासहितम् ।

---

प्रथमसर्गादारभ्य षष्ठसर्गपर्यन्तम् ।

महोपाध्याय-शिरोमणि-साहित्यनिपुणाद्यनेकबिरुदालंकृतेन
के. यल्. व्यासरायशास्त्रिणा
संशोधितं टिप्पण्या संयोजितं च ।

तृतीयं संस्करणम् ।

पालक्काद्-कल्पात्ति
श्रीगीर्वाणवाणीपुस्तकशालाधिपतिना
आर्. सुब्रह्मण्योपाध्यायेन
प्रकाशितम् ।

---

१९३०

## PUBLISHERS' NOTE.

It affords us great pleasure in publishing the Third Edition of this Kavyaratnam with the famous commentary of Mallinatha. A glance at this book will show that special attention has been paid to the get-up being excellent and to a thorough and careful revision of the book. The critical Introduction and the different readings and Foot-notes now newly added, are other noteworthy features. We, therefore, trust that this edition will receive greater appreciation from the public.

We owe a deep debt of gratitude to the Editor Pandit K. L. V. Sastri, whose intense love of Sanskrit Literature and unbounded enthusiasm in the publication of rare and useful Sanskrit works, made him take enormous pains in bringing out the present valuable edition.

Our heart-felt thanks are due to Sriyuta, Mahamahopadhyaya, Vidyavacaspati Professor, S. Kuppuswami Sastri, M.A., I.E.S., for his generous response to our request to write a Foreword.

A similar publication of the Second Part containing 7—12 sargas has been recently brought out by us. We propose to publish on the same lines the remaining cantos, (13—22) at an early date.

## FOREWORD

BY

MAHĀMAHOPĀDHYĀYA—VIDYĀVĀCASPATI
PROFESSOR S. KUPPUSWAMI SASTRI, M.A., I.E.S,
*Madras.*

I have much pleasure in acceding to the request of the enterprising Sanskrit publisher of Palghat—Brahmaśrī R. Subrahmanya Vadhyar—to write a short foreword to his handy, neat and cheap edition of Śrī Harṣa's Naiṣadha with Mallinātha's commentary.

Śrī Harṣa is the author of the Naiṣadhīyacarita which is one of the most important *mahākāvyas*, the study of which is insisted upon, in the traditional method of Sanskrit teaching, as a *sine qua non* of sound equipment in Sanskrit language and literature. From internal as well as external evidences, it is evident that Śrī Harṣa flourished in the latter half of the twelfth century A. D., under Vijayacandra and Jayacandra of Kanauj. Of Śrī Harṣa's metrical compositions, Naiṣadha is the best known and perhaps the biggest also; and his greatest work, which stands out prominently as at once the most formidable and admirable monument of *advaitic* polemics is the *Khaṇḍanakhaṇḍakhādya*, popularly known as *Khaṇḍana.* While it is very easy to assign the highes

position to Śrī Harṣa among Śāstraic authors, more especially on the polemical side, it is not so easy to determine his exact position among Sanskrit poets. Tradition regards Śrī Harṣa as a *Mahākavi*, or one of the greatest *kavirājas*, as he does not hesitate to describe himself in the concluding verses of some of the cantos. There is no doubt that he has exhibited in his Naiṣadha, a superabundance of poetic skill (*śakti*) and erudition (*vyutpatti*) —the two elements which, within appropriate limits, constitute the make-up of a genuine poet. If a sahṛdaya could appreciate the *poetry of nonsense*, such as one finds in śakāra's poetry in the Mṛcchakaṭika, it is scarcely difficult to see that tough-minded sahṛdayas can easily find in Śrī Harṣa's *Naiṣadha* a masterly specimen of the *poetry of erudite oddity*. It is in this sense that the Naiṣadha is sometimes described as a *śāstra-kāvya*. Here, scholars are likely to be reminded of Bhāmaha's unforgettable observation :—

"काव्यान्यपि यदीमानि व्याख्यागम्यानि शास्त्रवत् ।
उत्सवः सुधियामेव हन्त दुर्मेधसो हताः" ॥ II-10.

Bhaṭṭi, in his famous Bhaṭṭi-kāvya, challenged the above observation by Bhāmaha, with a considerable measure of success, and produced what might be characterised as the highest type of the *poetry of sauśabdya*, making the following remark at the end of his work:—

"व्याख्यागम्यमिदं काव्यमुत्सवः सुधियामलम् ।
हता दुर्मेधसश्चास्मिन् विद्वत्प्रियतया मया" ॥ XXII-34.

Bhaṭṭi's remark applies to Śrī Harṣa's Naiṣadha, not merely from the view-point of *sauśabdya*, but also from

that of versatile *śāstraic* erudition. The subjoined extracts from the end of the last canto of the Naiṣadha may, with advantage, be studied in order to know Śrī Harṣa's own estimate of his poem :—

यथा यूनस्तद्वत्परमरमणीयापि रमणी
कुमाराणामन्तःकरणहरणं नैव कुरुते ।
मदुक्तिश्चेदन्तर्मदयति सुधीभूय सुधियः
किमस्या नाम स्यादरसपुरुषानादरभरैः ॥
दिशि दिशि गिरिग्रावाणः स्वां वमन्तु सरस्वतीं
तुलयतु मिथस्तामापातस्फुरद्ध्वनिडम्बराम् ।
स परमपरः क्षीरोदन्वान् यदीयमुदीयते
मथितुरमृतं खेदच्छेदि प्रमोदनमोदनम् ॥

From the above extracts, it is evident that, if Śrī Harṣa himself were to characterise the *fruitive mode* (*pāka*) of his poem, he would call it *amṛta-pāka*, obsessed as he is with the purāṇic association of *amṛta* with a laborious process of churning. But, Bhāmaha's disciples would like to bring the pāka of Śrī-Harṣa's poem under *kapittha-pāka* (the wood-apple fruition), which is described thus:—

"अहृद्यमसुनिर्भेदं रसवत्त्वेऽप्यपेशलम् ।
काव्यं कपित्थमामं यत् + + + + " ॥

(Bhāmaha V—62)

Some would describe the pāka of the Naiṣadha a *nārikela-pāka* (cocoanut fruition); but this would necessitate Śrī-Harṣa's poetry being placed, without adequat

justice, on a par with Bhāravi's poetry. While one might justly describe Bhāravi's poetry thus:—

"स्फुटता न पदैरपाकृता न च न स्वीकृतमर्थगौरवम्"

one is greatly tempted to describe Śrī-Harṣa's poetry in these terms:—

स्फुटता कुपदैरपाकृता ह्यपि वा दुर्ग्रहवक्रसूक्तिभिः

In fact, it would be appropriate to characterise the *pāka* of Śrī-Harṣa's poem as *auṣadha-pāka*, as the oft-quoted tag "नैषधं विद्वदौषधम्" indicates, and as the name खण्डनखण्डखाद्य—which, in *Āyur-veda*, denotes a certain medicine—given to his greatest polemical work, may suggest.

It is worthy of note that Śrī-Harṣa belonged to a century, which was dominated by the *vakrokti-type* of poetry and in which poets of the *vakrokti-school* like *Maṅkhaka*, the author of the *Śrīkaṇṭha-carita*, flourished. Perhaps, for the reason that Śrī-Harṣa himself was a votary of the *vakrōkti-school*, his poem easily won the plaudits of the Kashmirian poets of the 12th century, as may be seen from the following extract from the 16th canto of the Naiṣadha:—

"काश्मीरैर्महिते चतुर्दशतयीं विद्यां विदद्भिर्महा-
काव्ये तद्भुवि नैषधीयचरिते सर्गोऽगमत्षोडशः" ||

(16—131).

In concluding this foreword, I am forcibly reminded of what my sāhitya-vidyā-guru (my late maternal uncle —Brahmaśrī Muttappā śāstrī, alias Venkaṭasubrahmaṇya

śāstrī) used to remark about the Naiṣadha, in my boyhood, somewhat waggishly as it may seem; it may be put thus:—If Kālidasa's *muse* should be described as a *padminī*, if Bhāravi's *muse* should be described as a *śaṅkhinī*, if Māgha's *muse* should be described as a *citriṇī*, Srī-Harṣa's *muse* might well be described as a *hastinī*, though capable of assuming the other forms also."

Mallinātha's commentary, which is incorporated in this edition and which follows the motto "नामूलं लिख्यते किंचिन्नानपेक्षितमुच्यते", greatly enhances the value of this edition. This handy volume contains only six cantos. It is hoped that this enterprising publisher of Palghat will, ere long, issue equally cheap and handy volumes of the remaining cantos also of this famous Mahākāvya.

Mylapore,<br>28—5—30.

S. KUPPUSWAMI ŚĀSTRĪ.

॥ श्रीः ॥

## ॥ काव्यान्तश्लोकाः ॥

यथा यूनस्तद्वत्परमरमणीयापि रमणी
कुमाराणामन्तःकरणहरणं नैव कुरुते ।
मदुक्तिश्चेदन्तर्मदयति सुधीभूय सुधियः
किमस्या नाम स्यादरसपुरुषानादरभरैः ॥

दिशि दिशि गिरिग्रावाणः स्वां वमन्तु सरस्वतीं
तुलयतु मिथस्तामापातस्फुरद्ध्वनिडम्बराम् ।
स परमपरः क्षीरोदन्वान् यदीयमुदीयते
मथितुरमृतं खेदच्छेदि प्रमोदनमोदनम् ॥

ग्रन्थग्रन्थिरिह क्वचित् क्वचिदपि न्यासि प्रयत्नान्मया
प्राज्ञंमन्यमना हठेन पठिती मास्मिन् खलः खेलतु ।
श्रद्धाराद्धगुरुः श्लथीकृतदृढग्रन्थिः समासादय-
त्वेतत्काव्यरसोर्मिमज्जनविधिव्यासज्जनं सज्जनः ॥

ताम्बूलद्वयमासनं च लभते यः कान्यकुब्जेश्वरात्
यः साक्षात्कुरुते समाधिषु परं ब्रह्म प्रमोदार्णवम् ।
यत्काव्यं मधुवर्षि धर्षितपरास्तर्केषु यस्योक्तयः
श्रीश्रीहर्षकवेः कृतिः कृतिमुदे तस्याभ्युदीयादियम् ॥

श्रीः

# नैषधकाव्यस्य

# प्रस्तावना

—:o:—

## ॥ नैषधं विद्वदौषधम् ॥

इदं खलु नैषधाख्यं महाकाव्यं श्रीहर्षकविना प्रणीतं शब्दतोऽर्थतश्च गभीरायमाणं कालिदासादेः कृतिभ्यो विलक्षणभूतं कटुकौषधमिव द्राक्षारसलोलुपानामतिमात्रमुद्वेजकं भवति। अत एवेदं साहित्यकोटौ निवेश्य विमृश्यमानं काव्यरसिकानां गर्हणायाः पात्रतामेति । परं त्वीदृशीं गर्हणां परैः करिष्यमाणां विदन्नेव श्रीहर्षस्तदनादरेण काव्यमिदं कर्कशया शैल्या योजयामासेत्यवगम्यते । अपि च काव्यमिदं क्षीरोदेनोपमिन्वानः श्रीहर्षः प्रौढानामेवास्मिन् अवगाहनयोग्यतां रसामृतस्य मथनैकलभ्यतां च बोधयति । किं चास्याः कृतेः कार्कश्यदोषं पुरस्कृत्य दूषणमुद्भावयतो जनान् अरसिकान् व्यपदिशति, तैरस्यानादरणं चाकिञ्चित्करं ब्रवीति । दृश्यन्तां काव्यान्तश्लोकाः ॥

काव्य-चारुता

यद्यपि श्रीहर्षोऽयं प्रथमसर्गीयेण तृतीयेन श्लोकेन स्वस्यौद्धत्यं परिहरति, तथापि स्वस्य स्वकाव्यस्य च महिमातिशयं स्वयमेवोदीरयति तत्र तत्र सर्गान्तश्लोकेषु विविधैर्विशेषणैः । वस्तुतश्चैतैर्विशेषणैर्योग्यं मर्हत्येवेदं महाकाव्यम् । यतो हि काव्येऽस्मिन् अन्यैरक्षुण्णं पन्थान

माश्रयता कविना प्रतिनवैः शब्दैः समुज्ज्वलैरलङ्कारैश्चोद्भासमानः सहृदयाह्लादी शृङ्गार उपनिबद्धः । स च किञ्चिदिव कर्कशया शैल्या निबध्यमानोऽन्तर्हितात्मा नालिकेरसार इव संविदसिना सम्भिद्यमानः स्वाद्यतामेति । अतोऽत्र व्युत्पन्नमतयः प्रवर्तमानाः परानन्दहेतुं रसातिशयमास्वादयितुं प्रभविष्यन्ति ॥

इत्थं च काव्येऽस्मिन् कविना स्वेच्छयैव परित्यक्तः कालिदासादिकृतिसाधारणः प्रसादाख्यो गुणः । तेन झडित्यर्थस्फूर्तेरनुदयात् स्थितापि काव्यस्य महती शोभा नातीव प्रकाशते ।

काव्यदोषः

अपि च साहित्यशास्त्रकारैः काव्यचारुतापादकत्वेनोपन्यस्तानां गुणानामनुसरणे काव्यदूषकताबीजत्वेनोक्तानां दोषाणां निरसने च नायं कविर्यत्नवान् दृश्यते । काव्यप्रपञ्चं नियतिकृतेषु नियमेष्वनायत्तं पश्यन् कविरयं स्वच्छन्दमनुवर्तते । *अप्रसिद्धानामपि शब्दानां प्रयोगे, कवेर्न लेशतोऽपि सङ्कोचः । पद्मादयः शब्दाः साहित्यशास्त्रनियमानुल्लङ्घ्य पुल्लिङ्गत्वेनापि प्रयुक्ताः । अत एवेदं काव्यदोषाणामाकरत्वेन

---

* १०—तर्केष्वप्यसमश्रमस्य, १४—ज्योत्स्नाच्छसूक्तेः, १५—नवार्थघटनामेकामत्यजत इत्येतानि स्वस्य विशेषणत्वेन, १—चिन्तामणिमन्त्रचिन्तनफले शृङ्गारभङ्ग्या महाकाव्ये चारुणि, ६—सहजात्खण्डनखण्डतोऽपि क्षोदक्षमे, ८—कविकुलादृष्टाध्वपान्थे, ११—शृङ्गारामृतशीतगौ, १३—स्वादूत्पादभृति, १५—कृशेतररसस्वादौ, १६—काश्मीरैर्महिते चतुर्दशतयीं विद्यां विदद्भिः, २०—अन्याक्षुण्णरसप्रमेयभणितौ, इमानि 'महाकाव्ये' इत्यस्य विशेषणत्वेन च प्रयुज्यन्ते ।

निर्दिश्यते । परं तु नैते दोषाः कवेरव्युत्पत्त्या अशक्त्या वा समुपनताः किं तु अतिव्युत्पत्त्या अतिशक्त्या चेति ज्ञेयम् ॥

परिशीलितानेककोशोऽयं कविः सर्वत्र वश्यवाग् दृश्यते । धारालवाचोऽस्य मुखादुत्तरोत्तरं नवनवाः शब्दा धारावाहितया निरर्गलं निर्गलन्ति । काव्यभव्यतापादकः शब्दानुप्रासः कविनानेन सविशेषं सञ्चारितः सर्वत्र । शब्दार्थश्लेष-घटनायामनितरसाधारणोऽस्य कवेः पटिमा । नैषधान्तर्गता बहवः श्लोका नैव भाषान्तरैः शक्यानुवादाः । पञ्चनलीवर्णनावसरे पञ्चार्थकाश्चापि श्लोकाः सङ्घटिताः । शब्दशास्त्रानुरोधिनः प्रयोग-विशेषाश्चापि बहुलतया प्रयुक्ता उपलभ्यन्ते । यमक--मुरज-सर्वतो-भद्र-चक्रबन्धप्रभृतयः क्लिष्टबन्धाः केवलाः शब्दालङ्काराः कविनानेन कार्त्स्न्येन परित्यक्ताः ॥

शब्द-प्रयोगः

काव्येऽस्मिन् यद्यपि क्वचित् क्वचित् दीर्घदीर्घाः समासाः प्रयुक्ता उपलभ्यन्ते तथापि शृङ्गारानुगुणा वैदर्भी रीतिरेव सर्वाङ्गीणतया व्यापारिता । सा च पूर्वोक्तैः शब्दानुप्रासैरुप-स्कृता कालिदासादेः कृतिषु दृष्टाया वैदर्भ्या रीतेरतिदूरं वैलक्षण्यमाविष्करोति । अथाप्येषा वैदर्भी रीतिरेवेत्यसन्देहः । ध्वनितश्चाय-मर्थः कविना चतुर्थे सर्गे हंसोक्तौ—

रीतिः

धन्यासि वैदर्भि गुणैरुदारैर्यया समाकृष्यत नैषधोऽपि ।
इतः स्तुतिः का खलु चन्द्रिकाया यदब्धिमप्युत्तरलीकरोति ॥

अत्र हि नलकथावर्णनाय वैदर्भी रीतिः सञ्चारितेत्ययमर्थः कवेर्विवक्षितः प्रतीयते ॥

श्रीहर्षस्य वर्णनारीतिस्तावत् प्रायेणातिशयकल्पनाजटिलैव। स्वभावोक्तिस्तु सुतरां विरलीभूता नलेन गृहीतमुक्तस्य हंसस्य वर्णनादौ क्वचित् क्वचिदुपलभ्यते। अन्यत्र सर्वत्रापि विदग्धव्यवहारप्रसिद्धा उत्प्रेक्षामूलका एवार्थाः सङ्घटिताः।

वर्णना-रीतिः

खण्डनखण्डखाद्ये दृष्टा तस्य परमतखण्डनशक्तिरस्मिन् काव्येऽपि व्यक्तीभवति। यानि यानि हि वस्तून्यन्यैः कविभिरुपमानत्वेनाद्रियन्ते तानि सर्वाण्यप्युपमानबाह्यत्वेन सयुक्तिकं प्रतिपाद्यन्ते भैमीवर्णनादौ। किं च कविरयमात्मनो रासिक्यमभिव्यञ्जयन् अन्यैः कविभिरश्लीलत्वेनोपेक्षितान् शृङ्गारविषयानप्युपस्थापयति, परैरनुमेयशोभित्वेनाभिहितान्यङ्गान्यपि वाच्यवृत्त्याविशङ्कमुद्घाट्य वर्णयति दमयन्तीवर्णनायाम्। परं त्वेतेऽर्थाश्चारुतामापाद्य वर्ण्यमाना रम्यतामेव भजन्ते, न तु ग्राम्यताम्। इत्थं वाच्यार्थवैचित्र्यकल्पनायां श्रीहर्षः सिंहासनमर्हति। व्यङ्ग्योक्तौ स्वभावोक्तौ च कालिदासात् सुदूरं परिहीयते ॥

कविरयमात्मनः सर्वशास्त्रपाण्डित्यमाविष्कुर्वन्नतिविस्तरे सप्तदशे सर्गे सर्वाण्यास्तिकमतानि कलिमुखेन खण्डयन्निन्द्रादिमुखेन समाधत्ते। विविधान् शास्त्रार्थानपि तत्र तत्रोदाहरति। अत एवेदं काव्यं काव्यशास्त्रमिति शास्त्रकाव्यमिति च प्रथां भजते ॥

काव्येऽस्मिन् विविधानि रसवन्ति सम्भाषणानि सङ्घटितानि, यानि खलूत्तरोत्तरं रसवत्तराभिर्वाचोयुक्तिभिः संशोभमानानि न केवलं

कवेरेव किन्तु काव्यस्याप्यनितरसाधारणमुत्कर्षं ब्रुवन्ति । किं बहुना,

संवादाः सहृदयावर्जकसम्भाषणमयमिदं काव्यं काव्यान्तरातिशायि रामणीयकं बिभर्ति ॥

अत्र प्रधानभूतो रसः सम्भोगपर्यवसायी विप्रलम्भशृङ्गार एव । तत्र पूर्वेषु सर्गेषु विप्रलम्भं वर्णयित्वा अन्तिमेषु पञ्चसु सर्गेषु सम्भोगः प्रतिपाद्यते । स च लोकोत्तरविभावानुभावगतत्वेन

रसः वर्ण्यमानः समुचिततरैर्व्यभिचारिभावैः करुणहास्यादिभिरङ्गरसैश्च परं परिपोषं प्रापितः । किन्तु कवेरतिनिर्वहणैषितया प्रबन्धरसः कियदिव कृतान्तरायः समनुभूयते । अयं हि कविः विवर्णयिषितं तं तं विषयमाश्रित्य सुदूरमारोहति । यद्यप्येते विस्तरेण वर्ण्यमाना विषयाः पृथक्तयाऽनुवाच्यमानाः सहृदयानामानन्दं जनयन्ति तथापि प्रबन्धरसस्यास्वादे परिपन्थितामुपयन्ति ॥

तदिदं महाकाव्यं नैषधचरितमिति नैषधीयचरितमिति नलचरितमिति नलीयचरितमिति वैरसेनिचरितमिति भैमीभर्तृचरित्रवर्णनमिति च कविनैव बहुधा व्यपदिश्यते । वस्तुतश्चास्य

नामकरणौचित्यविचारः 'दमयन्तीस्वयंवरम्' इत्येव नामधेयमुचितम् । यतो ह्यत्र दमयन्तीस्वयंवरपर्यन्त एव वृत्तान्तः प्रस्तूयते, न तु तदनन्तरः । केचित्तु काव्यमिदं षष्टिसर्गात्मकं विंशत्युत्तरशतसर्गात्मकं वा श्रीहर्षेण प्रणीतं स्यादित्यभ्यूहन्ति । तत्र प्रामाण्यं न पश्यामः । अद्योपलभ्यमानमिदं महाकाव्यं द्वाविंशतिसर्गात्मकम् । तत्र द्वाविंशस्य सर्गस्यान्ते श्रूयमाणा "श्रीरस्तु नस्तुष्टये" इत्येवंरूपा मङ्गला-

शंसा काव्यस्यैतावन्मात्रत्वमेव ज्ञापयति । व्याख्यातारोऽपि तावत् द्वाविंशस्य सर्गस्यान्ते मङ्गलश्लोकान् निबध्नन्तः काव्यस्य परिसमाप्तिं बोधयन्ति । अत एव मङ्गलान्तत्वमिच्छता कविना मूलग्रन्थगतं कथाक्रममुल्लङ्घ्य प्रथमं कलिद्वापरयोः समागमं वर्णयित्वा पश्चाद् भैमीनलयोः सम्भोगः समनुवर्णितः, लोकानन्दनचन्द्रवर्णनपरेण भैमीनलयोः सम्भाषणेन ग्रन्थश्च परिसमाप्तिं नीतः । अतः श्रीहर्षेण द्वाविंशतिसर्गात्मकमेव काव्यं प्रणीतमित्यवसीयते ॥

काव्यपरिमाणम्

किञ्चिदूनैस्त्रिभिः सहस्रैः श्लोकैः सङ्घटितोऽयं ग्रन्थो रघुवंशादिभ्यो द्विगुणपरिमाणः सम्भवति । रघुवंशादौ हि सर्गाः सर्वे प्रायेण शतावरैरेव श्लोकैः सङ्घटिताः । अत्र तु द्वित्रान् सर्गानपहायान्ये सर्वेऽपि शताधिकैः श्लोकैः संयोजिताः । तत्रापि सप्तदशे सर्गे २२१ श्लोकाः समुपलभ्यन्ते ॥

वृत्तानि

अर्थवैचित्र्यकल्पनायां दत्तदृष्टिः कविरयं नैव नानाविधानां वृत्तानां योजनायां पृथग्यत्नमाधत्ते । अत्र हि केवलमेकोनविंशतिविधानि वृत्तान्युपयुज्यन्ते । तत्रेन्द्रवज्रासजातीयोपजातिः कवेरत्यन्तमभिमता सप्तसु सर्गेषु प्रयुज्यते । वंशस्थं च चतुर्षु सर्गेषु । द्वादशः सर्गो वंशस्थप्रधानो नानावृत्तमयः सन्निबद्धः ।

---

१. वनपर्वान्तर्गते सप्तविंशत्यध्यायात्मके नलोपाख्याने प्राथमिकेषु षट्स्वध्यायेषूपवर्ण्यमानं कथावस्तु काव्येऽस्मिन्नुपनिपध्यते । तत्र षष्ठाध्याये वर्ण्यमानं कलिद्वापरयोः प्रवेशं प्रथममुपन्यस्य पञ्चमाध्यायस्यान्ते वर्ण्यमानः सम्भोगः पश्चादुपवर्णितः ॥

श्लोकवृत्त वसन्ततिलका-स्वागताः द्वयोर्द्वयोः सर्गयोः, द्रुतविलम्बित-रथोद्धत-वैतालीयान्येकैकस्मिन् सर्गे चोपयुक्तानि । अचलधृति-तोटक-दोधक-पृथ्वीवृत्तैरेकैकानि मन्दाक्रान्तवृत्तेन पञ्च च पद्यानि ग्रथितान्युपलभ्यन्ते । पुष्पिताग्रा-मालिनी-शिखरिणी-स्रग्धरास्तत्र तत्र विरलतयोपात्ताः ॥

इतराः कृतयः

श्रीहर्षेणानेन—अर्णववर्णनम्, शिवशक्तिसिद्धिः, नवसाहसाङ्क-चम्पूः, च्छन्दःप्रशस्तिः, विजयप्रशस्तिः, गौडोर्वीशकुलप्रशस्तिः, ईश्वराभिसन्धिः, स्थैर्यविचारणप्रकणम्, खण्डनखण्डखाद्यम् इत्येतानि ग्रन्थान्तराणि प्रणीतानि । तेषु ईश्वराभिसन्धिग्रन्थमपहायान्ये सर्वेऽपि नैषधीयसर्गान्तश्लोकेषु निर्दिश्यन्ते । तेषु नैषधीयचरितं खण्डनखण्डखाद्यं चेति ग्रन्थद्वयमद्यत्व उपलभ्यमानं मुद्रणेन प्रकाशितं वर्तते । इतरे ग्रन्थाः सम्प्रति नोपलभ्यन्ते ॥

कृतीनां पौर्वापर्य-विचारः

अत्र श्रीहर्षस्य का वा प्रथमा कृतिरिति निर्णयो दुश्शकः । यतो हि नैषधे तेनेतरासां कृतीनां निर्देशान्नैषधमेव तस्यान्तिमा कृतिर्भवितुमर्हतीत्यवगम्यते । किन्तु नैषधीयाः केचित् सन्दर्भविशेषाः खण्डनखण्डखाद्ये समुद्धृताः । इत्थंगते वस्तुनि कथं पौर्वापर्यनिर्णयः क्रियताम् । अथापि तावत्—नैषधं खण्डनखण्डखाद्यं च समकालमेव कविना प्रणीतमिति शक्यमभ्यूहितुम् । तथा हि—षष्ठे सर्गे 'सहजात् खण्डनखण्डतोऽपि क्षोदक्षमे नैषधीयचरिते' इत्युक्तम् । अत्र सहजपदप्रयोग-

स्वारस्यादस्मदुक्तोऽर्थः पर्यवसीयते । इतरे ग्रन्थाः काव्येऽस्मिन् निर्दिश्यमाना नैषधप्रणयनात् पूर्वमेव प्रणीताः सम्भाव्यन्ते । ईश्वराभिसन्धिस्तु काव्येऽस्मिन् अनिर्दिश्यमानः पश्चात्काले प्रणीतः स्यात् । अत एव खण्डनखण्डखाद्यस्य प्रथमे परिच्छेदेऽद्वैतप्रकरणे 'शेषं चेश्वराभिसन्धौ स्वप्रकाशवादे निर्वक्ष्यामः' इति, अद्वैतप्रकरणोपसंहारे 'श्रुतिप्रामाण्यं सिद्धार्थप्रामाण्यं चेश्वराभिसन्धौ साधयिष्यते' इति चोभयत्रापि लृटः प्रयोगः सङ्गच्छते ।

तत्र खण्डनखण्डखाद्याख्यो ग्रन्थो लौकिकानामलौकिकानां च विश्वेषां वस्तूनामनिर्वचनीयतां प्रतिपादयन् 'अनिर्वचनीयतासर्वस्वम्' इत्यभिधान्तरेण व्यपदिश्यते। ग्रन्थोऽयं प्राधान्येन नैयायिकान्

**खण्डनखण्डखाद्यम्**

प्रत्यवतिष्ठमानस्तत्प्रतिपादितानां षोडशपदार्थानामस्तित्वेन व्यवहारस्याशक्यतां निरूप्य तदभिमतं द्वैतवादं निरस्यति। अयं ग्रन्थोऽप्यतिदुर्बोधया सरण्या निबद्धः । काव्यानां मध्ये नैषधस्य यादृशं स्थानं तादृशमेव स्थानं खण्डनखण्डखाद्यस्य दर्शनग्रन्थानां मध्ये । श्रीहर्षस्य शब्दप्रयोगकुशलत्वमस्मिन् ग्रन्थेऽप्यभिव्यज्यते । तत्रायं मङ्गलश्लोक उदाहरणमर्हति—

अविकल्पविषय एकः
स्थाणुः पुरुषः श्रुतोऽस्ति यः श्रुतिषु ।
ईश्वरमुमया न परं
वन्देऽनुमयापि तमधिगतम् ॥

इतरेषां संस्कृतग्रन्थप्रणेतॄणामिव श्रीहर्षस्यापि चरित्रार्थः काप्यन्धतमसे निलीनो यत्नेनान्वेषणीयो वर्तते । अथापि तावदयं

कविकालः

श्रीहीरनाम्नः पण्डितात् मामल्लदेव्यामुत्पन्न इति कविनैव प्रतिसर्गमुपनिबध्यमानादान्तिमश्लोकादवधार्यते । किञ्चायं गौडदेशाभिजन इति राजशेखरेण[1] १३४७—तमे क्रिस्तुवर्षे प्रणीतात् प्रबन्धकोशादवगम्यते । तद्देशीयत्वादेव श्रीहर्षेण गौडोर्वीशकुलप्रशस्ति-नामको ग्रन्थः प्राणायीति तर्कयामः । अपरे केचिदिमं वङ्गदेशीयं कथयन्ति ॥

श्रीहर्षोऽयं कान्यकुब्जेश्वरेण सम्भावितोऽभूदिति 'ताम्बूलद्वय-मासनं च लभते यः कान्यकुब्जेश्वरात्' इति काव्यान्तश्लोकान्निश्चीयते ।

श्रीहर्षस्य जयन्त-चन्द्रसम-कालिक-त्वम्

तत्र कान्यकुब्जेश्वराः[2] क्रमायाता बहवः श्रूयन्ते । तेषु कस्य राज्ञः सभायां श्रीहर्षः सम्मानितोऽभूदिति जिज्ञासायाम्—जयन्तचन्द्रस्य सभायां श्रीहर्षः सम्मानितोऽ-भूदिति राजशेखरस्य वचनं शरणार्हं भवति । जयन्त-चन्द्रस्य कालश्च चारित्रकारैर्निर्णीतः । तथा हि—जय-चन्द्रापरनाम्ना जयन्तचन्द्रेण ११८७—तमे क्रिस्तुवर्षे काश्यां कश्चित् ग्राम आढलेपौत्राय अणङ्गनाम्ने ब्राह्मणाय दत्त इति

---

१. बालरामायण-बालभारत-विद्धसालभञ्जिकानां कर्ता राजशेखरोऽ-स्मादन्यः, यः खलु नवमशताब्द्या अन्ते दशमशताब्द्या आदौ च स्थितः ।

२. यशोविग्रहः, महीचन्द्रः, चन्द्रदेवः, मदनपालः, गोविन्दचन्द्रः, विजयचन्द्रः, जयच्चन्द्र इति वंशानुक्रमो दानशासने निर्दिष्टः ।

तदीयात् दानशासनादवगम्यते । तच्च दानशासनं सम्प्रत्युपलभ्यमानं मुद्रणेन प्रकाशितं वर्तते । इत्थं जयन्तचन्द्रसमकालिकोऽयं श्रीहर्षः क्रैस्तवीयद्वादशशताब्द्यां स्थितः सम्भाव्यते । अत एव क्रिस्तोः परं १२९६—तमे चाण्डूपण्डितेन[1] प्रणीतायां नैषधदीपिकाख्यायां व्याख्यायां नैषधमिदं नव्यत्वेन निर्दिश्यमानमुपपद्यते । अपि च श्रीहर्षोऽयं क्रिस्तोः परमेकादश्याः शताब्द्याः पूर्वार्धे स्थितं [2]महिमभट्टं तत्प्रणीतं व्यक्तिविवेकं च खण्डनखण्डखाद्येऽनुस्मरन् स्वस्य तदपेक्षयाऽर्वाचीनत्वमवधारयति । किञ्चैकादश्याः शताब्द्या उत्तरार्धे लब्धजनुषा धाराधिराजेन भोजराजेन प्रणीते सरस्वतीकण्ठाभरणे ततः पूर्वेषां प्रख्यातानां कवीनां तत्कृतीनां वा नामानि निर्दिष्टान्युपलभ्यन्ते, न तु श्रीहर्षस्य नापि नैषधस्य । यदि हि श्रीहर्षस्ततः प्राचीनोऽभविष्यत् तर्हि तस्यापि

---

१. श्रीमानालिगपण्डितः स्वसमयाविर्भूतसर्वाश्रम-
श्चाण्डूपण्डितसंज्ञितं प्रसुषुवे श्रीगौरिदेवी च यम् ।
बुद्ध्वा श्रीमुनिदेवसंज्ञविबुधात्काव्यं नवं नैषधं
द्वाविंशे च स वर्णने विवरणं सर्गे च चक्रे क्रमात् ॥

२. महिमभट्टस्य समयो महामहोपाध्याय—डाक्टर्—टि. गणपतिशास्त्रिभिः व्यक्तिविवेकस्य प्रस्तावनायां व्यवस्थापितः । महिमभट्टस्यानुस्मरणं च श्रीहर्षेण खण्डनखण्डखाद्यस्य चतुर्थे परिच्छेदे तर्कखण्डनावसरे कृतम् । तथा हि—

दोषं व्यक्तिविवेकेऽमुं कविलोकविलोचने ।
काव्यमीमांसिषु प्राप्तमहिमा महिमादृत ॥

नाम तत्र निरदिक्ष्यत । इत्थं च श्रीहर्षोऽयं क्रिस्तोः परं द्वादश्यां शताब्द्यां स्थित इत्यास्थीयमानं सङ्गच्छते ॥

श्रीहर्षस्य द्वादश-शताब्दीतः प्राक्तनत्व-निरसनम्

यत्तु केचिदाहुः—क्रिस्तोः परमेकादश्याः शताब्द्या उत्तरार्धेऽवतीर्णेन षड्दर्शनीव्याख्यात्रा वाचस्पतिमिश्रेण श्रीहर्षप्रणीतस्य खण्डनखण्डखाद्यस्य खण्डनात्मकः खण्डनोद्धारनामा ग्रन्थः प्रणीतः; अतस्ततः प्राक्तनत्वं श्रीहर्षस्य व्यक्तीभवतीति, तन्न साधीयः । यतो हि वाचस्पतिमिश्रा बहवः श्रूयन्ते यैर्धर्मग्रन्था दर्शनग्रन्थाश्च विरचिताः । तेषु कतमेन वाचस्पतिमिश्रेण खण्डनोद्धारः प्रणीत इति निर्णयो दुश्शकः । षड्दर्शनीव्याख्यात्रा स प्रणीत इत्यत्र न किञ्चिद्विनिगमकम् । अतः खण्डनोद्धारकर्ता वाचस्पतिमिश्रः षड्दर्शनीव्याख्यातुरन्य एव भवितुमर्हति । यच्च केचिदाचक्षते—सायणाचार्यविरचिते शङ्करविजयाख्ये ग्रन्थे श्रीहर्षस्य शङ्कराचर्यसमकालिकत्ववर्णनात् कविरयं नवमशतकीयः सम्भाव्यत इति तदपि नोपपद्यते । सायणाचार्यो हि सप्तमशतकीयौ बाणमयूरावपि नवमशतकाब्दीयेन शङ्कराचार्येण समकालिकौ वर्णयन् चरित्रवस्तुनिर्णये न प्रामाण्यमर्हति । यदपि केचिदस्य कालिदासात् प्राचीनतरत्वमुल्लिखन्ति तदप्यपेशलम् । श्रीहर्षो हि खण्डनखण्डखाद्ये तर्कखण्डनावसरे 'विषवृक्षोऽपि संवर्ध्य स्वयं छेत्तुमसाम्प्रतम्' इति कालिदासस्योक्तिं निदर्शयति ॥

इत्थं च यावत् श्रीहर्षप्रणीतं चरित्रतत्त्वनिश्चायकं ग्रन्थान्तरं नोपलभ्यते तावद्राजशेखरस्य वचनं प्रमाणीकृत्य श्रीहर्षस्य जयन्तचन्द्र-

समकालिकत्वमेव निश्चीयमानं सङ्गच्छते । श्रीहर्षप्रणीतत्वेन श्रूयमणो विजयप्रशस्तिनामको[१] ग्रन्थश्च जयन्तचन्द्रजनकस्य विजयचन्द्रस्य प्रशस्तिमेव विषयीकरोतीत्यपि शक्यवचनम् ॥

श्रीहर्षः शास्त्र-पण्डितः

सोऽयं श्रीहर्षः सकलशास्त्रवित् अतिमेधावी वादगोष्ठीष्वकुण्ठ-प्रसरोऽप्रतिभटः पण्डितोऽभूत् । स च क्वापि राजसभायां स्वपितृपराभावुकस्य कस्यापि नैयायिकस्य वैरनिर्यातनार्थं मृत्युशय्यामधिशयानेन स्वपित्रा समादिष्टः शास्त्राण्यध्यगीष्टेति श्रूयते । अनेन कस्मिन् देशे विद्याभ्यासः कृतः ? मन्यामहे काश्मीरेषु । यतो ह्ययं कश्मीरदेशीयेषु विद्वत्सु महतीमात्मनः [२]प्रतिपत्तिं प्रकटयति । सैषा प्रतिपत्तिः प्राधान्येन स्वस्य गुरुं सहाध्यायिनश्च लक्ष्यीकरोतीति नस्तर्कः । अयं च न केवलं शास्त्र-पण्डित एव किन्तु [३]महायोगी चासीत्, यः खलु समाधौ परं ब्रह्म

---

१. सम्प्रति मुक्तकत्वेनोपलभ्यमानोऽधस्तनः श्लोको विजयप्रशस्ति-ग्रन्थगतो भवितुमर्हति--

गोविन्दनन्दनतया च वपुःश्रिया च
मास्मिन् नृपे कुरुत कामधियं तरुण्यः ।
अस्त्रीकरोति जगतां विजये स्मरः स्त्री-
रस्त्री जनः पुनरनेन विधीयते स्त्री ॥

२. उक्तं हि तेन षोडशसर्गस्यान्तिमे श्लोके—'काश्मीरैर्महिते चतुर्दशतयीं विद्यां विदद्भिः' इति ।

३. दृश्यतां चतुर्थः काव्यान्तश्लोकः ।

साक्षाच्चकारेति तस्यैव वचनादवगम्यते । इत्थं शास्त्रपण्डितस्यापि महायोगिनोऽपि तस्य काव्यपथेऽपि गतिरप्रतिहतैवेति व्यक्तमेव ॥

नैषधीयचरितस्य मूलभूतो ग्रन्थो महाभारतम्, यत्र हि वनपर्वणि सप्तविंशत्याऽध्यायैः साविस्तरमुपाख्यायते कथैषा । तत्र

**नैषध-चरितस्य मूलग्रन्थः**

प्राथमिकेषु षट्स्वध्यायेषु दृश्यमानः कथांशः परं काव्येऽस्मिन्ननुवर्ण्यते । मूलग्रन्थोपवर्णितायां नलस्य कथायां श्रीहर्षस्य महती[१] बहुमतिः । अतः प्रायेण काव्येऽस्मिन् मूलग्रन्थगतमेव कथावस्तु वर्णनाविशेषैः सातिशयतां प्राप्य निबध्यते, न तु तस्मिन्नन्यथाभावः सम्पाद्यते । अथापि सूक्ष्मतराः केचिद्विशेषाः कविना स्वेच्छया सम्पादिताः प्रत्यभिज्ञायन्ते । तथा हि—महाभारते हंसो नलेन विलासवने दृष्टत्वेनोक्तः । नैषधे तु कल्पनाकुशलेन कविना विलासवनान्तर्गतस्य क्रीडासरसः पुलिनेऽवलोकितत्वेन वर्ण्यते । अपि च मूलग्रन्थानुरोधेन दमयन्तीसविधगमनप्रतिज्ञायाः परमेव हंसो नलेन मुच्यते । एतत्काव्यानुरोधेन तु हंसस्य दीनदीनेन विलापेन सञ्जातकारुण्यो नलः प्रथममेव तं विमुञ्चति । हंसोऽपि तेन कृतज्ञः सन् स्वयमेव दमयन्तीसविधगमनं तच्चित्तावर्जनं च करिष्यामीति प्रतिजानीते । किञ्च महाभारते नलः परं सुरैः दूत्ये नियुक्तः श्रूयते । इह तु नलस्य प्रेषणात् पूर्वमेव देवैः पृथक् सोपहारहस्ता दूत्योऽपि प्रेषितत्वेनोच्यन्ते । इत्थं स्वयंवरसभायां राजगुणवर्णनाय सरस्वत्याः प्रवेशनमपि

---

१. उक्तं हि तेन प्रथमे श्लोके "निपीय यस्य क्षितिरक्षिणः कथास्तथाद्रियन्ते न बुधाः सुधामपि" इति ।

कविकल्पितो विशेषः, न तु महाभारते दृष्टः । एवंविधाः खलु सूक्ष्मेक्षणिकया विभाव्यमाना विशेषाः कवेः कल्पनाकौशलम् उचितज्ञतां च प्रथयन्ति । अपि चान्तिमेषु पञ्चसु सर्गेषु कविरात्मनो वात्स्यायनतन्त्रकोविदत्वमावेदयन् महाभारते द्वित्रैः श्लोकैरुपक्षिप्यमाणं सम्भोगशृङ्गारं महता प्रबन्धेन वर्णयति ॥

प्राक्तनसामुदायिकाचारप्रतिपादनाभावः

इत्थं प्राधान्येन मूलग्रन्थाश्रयामेव सरणिमनुरुध्य निबध्यमानेऽतिशयकल्पनासङ्कुलेऽस्मिन् काव्ये प्राक्तनाः सामुदायिका आचाराः स्तोकतयैव सङ्क्रान्ताः समुपलभ्यन्ते । जन्यभोजनप्रकरणे प्रतिभासमाना अपि केचित् तादात्विकाः सम्प्रदायविशेषाः कविकल्पितासु विविधासु परिहासकेलिष्वन्तर्लीनाः समवलोक्यन्ते । स्वयंवरसभापि तावत् अमानुषोचितां दशाम् अतिशयस्य परां काष्ठां च प्रापिता दृश्यते, यत्र हि त्रैलोक्यवासिनामागमनं कथयता कविना वासुकिप्रभृतीनां फणागणस्तेषां भैम्यां सात्त्विकविकाराविर्भावश्च वर्ण्यते । इत्थंरूपैषा कालिदासोपवर्णितात् स्वाभाविकस्वरूपादिन्दुमतीस्वयंवरात् अतिदूरं वैलक्षण्यमाविष्करोति ॥

नलः

नलः सर्वासां विद्यानां सर्वेषां गुणानां चाकरत्वेन वर्ण्यते । तस्य सूदविद्यानैपुण्यम् अश्ववेदवैचक्षण्यं च विशेषतः प्रस्तूयते । हंसं गृहीत्वा मुक्तवतस्तस्य सौशील्यादयः, देवानां नियोगेन भैमीसविधं प्राप्य दूत्यकृत्यं निर्व्याजं निरूढवतस्तस्य स्थैर्यादयश्च गुणाः प्रकटीभवन्ति । सौन्दर्ये नलोऽयं त्रैलोक्यातिशायित्वेन वर्ण्यते ।

इत्थं नलस्य सौन्दर्यसौशील्यादीन् गुणान् भूयो भूयः सातिशयं वर्णयन्नपि कविस्तस्य राजगुणानधिकृत्य मूकिमानमवलम्बते । नलो हि स्वीयां राज्यधुरां सचिवेषु निक्षिप्य दारसारेण सह रममाणः केषुचिद्वैदिकेषु कर्मसु प्रवृत्तत्वेनोपवर्ण्यते । इत्थंरीत्या वर्ण्यमानोऽयं नलः, कालिदासोक्तात् प्रजापालनजागरूकात् दुष्यन्तादेर्दिलीपादेश्च विलक्षणेन रूपेणोपस्थापितो द्रष्टव्यः ॥

दमयन्ती तावत् भीमराजस्यैकैव तनया पित्रा स्नेहेन परिपालिता कृतविद्या चाभूत् । सा सर्वदैव सखीवृन्दमध्यगता सरसालापविदग्धा परमरसिका च दृश्यते । विनोदप्रिया सा प्रासादशृङ्गेषु प्रमदवनेषु च सखीपरिवृता कालं नयति । सौन्दर्ये सा त्रैलोक्यस्त्रैणातिशायिनी वर्ण्यते । तदीयां दमयन्तीत्याख्यामेवं व्युत्पादयति कवि.—

दमयन्ती

भुवनत्रयसुभ्रुवामसौ दमयन्ती कमनीयतामदम् ।
उदियाय यतस्तनुश्रिया दमयन्तीति ततोऽभिधां दधौ ॥ इति ।

सैषा पतिव्रतानामादर्शभूतत्वेन कथ्यते । तथा हि—देवानां दूतीभिः सोपहारं मधुरैर्वचोभिरभ्यर्थ्यमानापि, दूत्ये प्रवृत्तेन नलेन विविधं प्रलोभ्यमानापि सा न स्वीयात् सङ्कल्पात् पदमप्यचालीत् । नापि स्वर्गभोगान् बहुमन्यत । प्रथमं मनसा वृतं नलं परित्यज्यान्यस्य वरणे पातिव्रत्यभङ्गप्रसङ्गममन्यत । अनेन तस्याः स्थैर्यादयो गुणाश्चापि प्रकाशीभवन्ति । राजतनयापि सा पूज्यपूजां न व्यतिक्रामति । देवतासु तस्याः परमा भक्तिः । यतो हि सा स्वयंवर-

सभायां सरस्वत्याः श्लेषसङ्कुलैर्वाग्जालैर्व्यामोहितापि देवतानां प्रसादेन स्वीयं सङ्कल्पं साधयामास । इत्थमेषा सर्वासां स्त्रीणामनुकरणीयचारित्रत्वेन निदर्शिता ॥

विदर्भराजस्य भीमस्य दमनमहर्षेः प्रसादेन दम-दान्त-दमनाख्यास्त्रयः पुत्राः, दमयन्तीत्येका पुत्री चाभूवन्निति महाभारताद-

**भीमराजः**

वगच्छामः । तत्र काव्येऽस्मिन् भीमराजः स्वयंवरावसरे नानाभुवनागतानां राज्ञामुपचरणादौ प्रवृत्तो दृश्यते । दमोऽपि जन्यभोजनप्रकरणे व्यापृतत्वेनाख्यातः । इतरयोः पुत्रयोर्वृत्तान्तो नात्र प्रस्तूयते । तत्रापि भीमराजपत्न्याः स्वयंवरसभायां प्रवेश एव नोपलभ्यते । न च सा सर्वथैव कविना विस्मृता । यतो हि स्वयंवरानन्तरं भीमराजः सुतया सहान्तःपुरं प्रविश्य नलं वृतवत्याः सुताया उचितकारितां भार्यायै कथयन् प्रस्तूयते । एवंगते भूतार्थे बाणेनेव श्रीहर्षेण कस्मान्न राज्ञ्याः प्रवृत्तयो वर्णिताः । [1]बाणो हि हर्षचरिते राज्यश्रीविवाहे यशोवत्याः सोत्साहान् व्यापारान् वर्णयन् सहृदयानां चेतः समावर्जयति । अत्र तु काव्ये न केवलं स्वयंवरसभायां नापि केवलं विवाहमण्डपे किन्तु दमयन्त्याः पतिगृहं प्रति प्रस्थानकालेऽपि राज्ञ्याः

---

तथा हि हर्षचरिते—'देवी तु यशोवती विवाहोत्सवपर्याकुलहृदया, हृदयेन भर्तरि, कुतूहलेन जामातरि, स्नेहेन दुहितरि, उपचारेण निमन्त्रितस्त्रीषु, आदेशेन परिजने, शरीरेण सञ्चरणे, चक्षुषा कृताकृतप्रत्यवेक्षणेषु, अनन्देन महोत्सवे, एकापि बहुधा विभक्तेवाभूत्'—इति वर्ण्यते ॥

प्रवेशो नोपवर्ण्यते । भीमराजः परं सुतामुपदेशवचनैः प्रेषयन् दृश्यते ॥

इत्थं दोषज्ञतामवलम्ब्य विमृश्यमाने वस्तुनि कतिपयानां दोषाणामुपलम्भेऽपि गुणभूयिष्ठत्वात् काव्यमिदं भारतवर्षीयैः परमोत्कृष्टानां कृतीनामन्यतमत्वेन परिगण्यते, परिशील्यते च सादरम् । अन्ततः काव्येऽस्मिन् पञ्चषान् वा सर्गाननधीयानाः संस्कृतविद्वांसो विरला एव स्युः ॥

नैषधस्य प्रचारः

तस्य चास्य महाकाव्यस्य विंशत्यधिकानि व्याख्यानानि तालपत्रगतान्युपलभ्यन्ते । तेषु नारायणपण्डितेन विरचितं नारायणीयमिति कर्तृनाम्ना व्यपदिश्यमानं प्रकाशाभिधानं व्याख्यानं सम्प्रति प्रचारगतं दृश्यते । तस्मिंश्च व्याख्याने यद्वा यद्वा यद्वेति पक्षशतमवलम्बमानेन महापण्डितेन स्वप्रतिभागोचराः सर्वेऽप्यर्थाः प्रतिपाद्यन्ते, न तु कवेर्विवक्षिताः । कवेर्विवक्षितानामर्थानां सरलया गत्या प्रतिपादने कविसम्मतानां पाठानामुल्लेखने च मल्लिनाथमहामहोपाध्याय एव नितरां प्रसिध्यति । तेन निर्मितैषा जीवातुसमाख्या व्याख्या ग्रन्थग्रन्थीरुद्ग्रन्थयन्ती नैषधं पिपठिषूणां महान्तं भारं लघूकरोति । अस्याश्च मल्लिनाथव्याख्यायाः शुद्धं मुद्रणं नाद्य यावत् प्रकाशितम् । तच्चेदानीं संस्कृतप्रणयिनां पुरस्तादुपह्रियते ॥

व्याख्यानानि

31—3—1930. PANDIT. K. L. V. SASTRI.

।। श्रीरस्तु ।।

जीवातुसमाख्यव्याख्यासहितं

# ।। नैषधकाव्यरत्नम् ।।

## प्रथमः सर्गः ।

निपीय यस्य क्षितिरक्षिणः कथास्तथाद्रियन्ते न बुधाः सुधामपि ।
नलः सितच्छत्रितकीर्तिमण्डलः स राशिरासीन्महसां महोज्ज्वलः ॥

"इन्दीवरदलश्याममिन्दिरानन्दकन्दलम् ।
वन्दारुजनमन्दारं वन्देऽहं यदुनन्दनम् ॥
अन्तरायतिमिरोपशान्तये शान्तपावनमचिन्त्यवैभवम् ।
तं नरं वपुषि कुञ्जरं मुखे मन्महे किमपि तुन्दिलं महः ॥"

अथ तत्रभवान् श्रीहर्षकविः 'काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये । सद्यः परनिर्वृतये कान्तासम्मिततयोपदेशयुजे ॥' इत्यालङ्कारिकवचनप्रामाण्यात् काव्यस्यानेकश्रेयःसाधनतां काव्यालापांश्च वर्जयेदिति तन्निषेधस्यासत्काव्यविषयतां च पश्यन् नैषधाख्यं महाका [illegible] त्या चिकीर्षुः चिकीर्षिताविघ्नपरिसमाप्तिसम्प्रदायाविच्छेदलक्षणफलसाधन [illegible] रणा- 'आशीर्नमस्क्रिया वस्तुनिर्देशो वापि तन्मुखम्' इत्याशीराद्यन्यतम [illegible] कैमुत्य- न्धमुखलक्षणत्वाच्च कथानायकस्य राज्ञो नलस्य भूतिलक्षणं [illegible] द्यत्र वस्त्व- वस्तु निर्दिशति—**निपीयेति** ॥ क्षितिरक्षिणः क्ष्मापालस्य यस्य [illegible] या ॥' इति उपाख्यानानि, निपीय नितरामास्वाद्य । पीङः समासे क्त्व.. [illegible] पिबतेः 'न ल्यपि' इति निषेधादीत्वासम्भवात् । बुधास्तज्ज्ञ

प्र रसैः कथा यस्य सुधावधीरिणी[1] नलः स भूजानिरभूद्गुणाद्भुतः ।
सुवर्णदण्डैकसितातपत्रितज्वलत्प्रतापावलिकीर्तिमण्डलः ॥ २ ॥

'ज्ञातृचान्द्रिसुरा बुधाः' इति क्षीरस्वामी । सुधामपि तथा यथैतत्कथां इत्यर्थः । नाद्रियन्ते न रोचन्त इत्यर्थः । अमृतादतिरिच्यन्ते रसैस्तत्कथा इति भावः । सितच्छत्रं कृतं सितच्छत्रितं श्वेतातपत्रीकृतमित्यर्थः । "तत्करोति" इति ण्यन्तात् कर्मणि क्तः । तत् कीर्तिमण्डलं यस्य सः महसां तेजसां राशिः रविरिव तेजस्वीत्यर्थः । महैरुत्सवैरुज्ज्वलः प्रकाशमानः, नित्यमहोत्सवशालीत्यर्थः । 'मह उद्धव उत्सवः' इत्यमरः । एतेन समृद्धिमद्वस्तुवर्णनादुदात्तालङ्कारो व्यज्यते । नलो नलाख्यः स राजा आसीत् अस्ति स्म । अत्र सुधाया अनादरासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिः । महसां राशिरिति तेजस्तद्वतोरभेदोक्तेर्भेदेऽप्यभेदरूपातिशयोक्तिः । कीर्तिमण्डले सितच्छत्रत्वरूपणात् रूपकालङ्कार इति त्रयाणां संसृष्टिः । अस्मिन्सर्गे वंशस्थवृत्तम् । 'जतौ तु वंशस्थमुदीरितं जरौ' इति लक्षणात् ॥ १ ॥

अथ तस्य गुणवर्णनायोपोद्घातत्वेन सामान्यतो गुणाढ्यत्वं तावदाह—

सर
रसैरिति ॥ यस्य नलस्य कथा रसैः स्वादैः । 'रसो गन्धे रसे स्वादे' इति
महामह
...श्च । सुधामवधीरयति तिरस्करोतीति सुधावधीरिणी । अमृतादतिरि
व्याख्या
...नस्वादेत्यतिशयोक्तिः । "ताच्छील्ये णिनिः" । भूर्जाया यस्य स
लघूकरोति
...ः, भूमेरेकाधिराडित्यर्थः । "जायाया निङ्" इति बहुव्रीहौ जाया
प्रकाशितम् ।
निङादेशः । स नलः गुणैः पुण्यश्लोकत्वादिभिरद्भुतोऽभूत्
31—3—1930.
पूर्वश्लोकोक्तसत्तानुवादेन गुणाढ्यत्वविधेर्न पौनरुक्त्यम्
...वर्णदण्डश्च एकसितातपत्रञ्च ते कृते तथोक्ते । द्वन्द्वा...

---

[1] 'सुधावधीरणी' इति क्वचित्पाठः ।

**पवित्रमत्रातनुते जगद्युगे स्मृता रसक्षालनयेव यत्कथा[1] ।**
**कथं न सा मद्गिरमाविलामपि स्वसेविनीमेव पवित्रयिष्यति ॥ ३ ॥**

"तत्करोति" इति ण्यन्तात् कर्मणि क्तः । सुवर्णदण्डैकसितातपत्रिते, ज्वलत्प्रतापावलिः कीर्तिमण्डलश्च ते येन सः, तथोक्तः; अप्रतिहतकीर्तिप्रताप इत्यर्थः । अत्रावलिमण्डलशब्दौ प्रतापकीर्त्योर्दण्डत्वातपत्रत्वरूपणयोगार्थम् । इह कीर्तेरातपत्रत्वरूपणं पूर्वश्लोकोक्तमपि सुवर्णदण्डवैशिष्ट्यादस्याप्यपूर्वत्वाद्वैचित्र्यविशेषः । प्रतापकीर्त्योर्यथासङ्ख्यं सुवर्णदण्डत्वसितातपत्रत्वरूपणाद्यथासङ्ख्यरूपकातिशयोक्तीनां संसृष्टिः ॥ २ ॥

कविः काव्यवर्ण्यनायकस्योत्कर्षमावहन् सम्प्रति स्वविनयमाविष्करोति—**पवित्रमिति** ॥ अत्र युगे अस्मिन् कलियुगे, यस्य नलस्य कथा यत्कथा, स्मृता सती, जगत् लोकम् । रसक्षालनयेव अम्बुक्षालनयेवेत्युत्प्रेक्षा । 'देहधात्वम्बुपारदाः' इति रसशब्दार्थोक्तौ विश्वः । पवित्रमातनुते शुभ्रं करोति । सा तत्कथा आविलां कलुषामपि । स्वसेविनीमेव स्वं सेवमानाम्, निरन्तरकीर्तनपरामित्यर्थः । मद्गिरं कथं न पवित्रयिष्यति, पवित्रं करिष्यत्येवेत्यर्थः । "कर्कोटकस्य नागस्य दमयन्त्या नलस्य च । ऋतुपर्णस्य राजर्षेः कीर्तनं कलिनाशनम् ॥" इति स्मरणादिति भावः । या स्मृतिमात्रेण शोधनी सा कीर्तनात् किमुतेति कैमुत्यन्यायेन शोधकत्वोक्तेरर्थापत्तिरलङ्कारः । 'एकस्य वस्तुनो भावाद्यत्र वस्त्वन्यथा भवेत् । कैमुत्यन्यायतः सा स्यादर्थापत्तिरलङ्क्रिया ॥' इति लक्षणात् ॥ ३ ॥

---

१. 'तत्कथा' इति क्वचित्पाठः ।

**अधीतिबोधाचरणप्रचारणैर्दशाश्चतस्रः प्रणयन्नुपाधिभिः ।**
**चतुर्दशत्वं कृतवान् कुतः स्वयं न वेद्मि विद्यासु चतुर्दशस्वयम् ॥४॥**
**अमुष्य विद्या रसनाग्रनर्तकी त्रयीव नीताङ्गगुणेन विस्तरम् ।**
**अगाहताष्टादशतां जिगीषया नवद्वयद्वीपपृथग्जयश्रियाम् ॥ ५ ॥**

---

अथास्य पूर्वोक्तगुणाद्भुतत्वं प्रपञ्चयति—**अधीतीति** ॥ अयं नलः चतुर्दशसु विद्यासु, वेदवेदाङ्गादिषु । "अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः । पुराणं धर्मशास्त्रं च विद्या ह्येताश्चतुर्दश ॥" इति स्मरणादिति भावः । अधीतिरध्ययनम् । बोधोऽर्थावगतिः । आचरणं तदर्थानुष्ठानम् । प्रचारणमध्यापनं तैश्चतुर्भिरुपाधिभिर्विशेषणैः । 'उपाधिर्धर्मचिन्तायां कैतवेऽपि विशेषणे' इति विश्वः । चतस्रः दशाः अवस्थाः प्रणयन् प्रापयन् अर्थाद्विद्यानामेव कर्मत्वं आधारत्वं तु वक्ष्यमाणचतुर्दशत्वधर्मापेक्षयेति विवेकः । चतस्रो दशा अवस्था यासां तासां भावश्चतुर्दशत्वम् । "त्वतलोर्गुणवचनस्य पुंवद्भावो वक्तव्यः" इति स्त्रियाः पुंवद्भावः । संज्ञाजातिव्यतिरिक्ताश्च गुणवचना इति सम्प्रदायः । चतुर्दशसङ्ख्याकत्वं गम्यते । तदभेदाध्यवसायेन विरोधमाभासयति । कुतः कथं वा स्वयं कृतवान् न वेद्मि तत्करणं दुर्विज्ञेयमित्यर्थः । स्वतः सिद्धस्य स्वयं करणं कथं पिष्टपेषणादित्येको विरोधः । चतुर्दशानां चतुरावृत्तौ षट्पञ्चाशतः, कथं चतुर्दशत्वमित्यपरः । चतुरवस्थापरत्वेन तत्परिहारात् विरोधाभासोऽलङ्कारः । 'आभासत्वे विरोधस्य विरोधाभास उच्यते' इति लक्षणात् । फलवदर्थावबोधपर्यन्तोऽस्य विद्यापरिश्रम इति भावः ॥४॥

**अमुष्येति** ॥ अमुष्य नलस्य रसनाग्रनर्तकी रसनाग्रसञ्चारिणीत्यर्थः ; "शिल्पिनि ष्वुन्" इति ष्वुन्, "षिद्गौरादिभ्यश्च" इति

दिगीशवृन्दांशविभूतिरीशिता दिशां स कामप्रसभावरोधिनीम् ।
बभार शास्त्राणि दृशं द्वयाधिकां निजत्रिनेत्रावतरत्वबोधिकाम् ॥ ६ ॥

---

ङीष् । सा विद्या सूदविद्येत्यर्थः । अस्याश्च रसनेन्द्रियग्राह्यार्थप्रतिपादकत्वाद्रसनाग्रनर्तकीति व्यपदेशः । त्रयीव त्रिवेदी इव । 'इति वेदास्त्रयस्त्रयी' इत्यमरः । अङ्गानाम् अङ्गभूतानाम् रसानां षण्णां गुणेन । उल्बणानुल्बणसमानरूपेण त्रिविधेन धर्मेण, अन्यत्राङ्गानां षण्णां निरुक्तादीनां गुणेन आवृत्त्या विस्तरं प्रपञ्चं नीता सती, नवानां द्वयं लक्षणया नवकद्वयम्, अष्टादशेत्यर्थः । तेषां द्वीपानां याः पृथग्भूता जयश्रियस्तासां जिगीषया जेतुमिच्छयेवेत्यर्थः । व्यञ्जकाप्रयोगाद्गम्योत्प्रेक्षा । अष्टादशताम् अगाहत अभजत । सूदविद्यापक्षे षण्णां रसानामुक्तरीत्या त्रैगुण्यात् । त्रयीपक्षे तु एकैकवेदस्यैकैकाङ्गवैशिष्ट्येन षाड्विध्याच्चाष्टादशत्वलाभः । यत्तु प्रागुक्ताश्चतुर्दश विद्या उक्त्वा–'आयुर्वेदो धनुर्वेदो गान्धर्वश्चेति ते त्रयः । अर्थशास्त्रं चतुर्थं तु विद्या ह्यष्टादश स्मृताः ॥' इति स्मरणात् अङ्गविद्यागुणेन त्रय्या अष्टादशत्वमिति उपाध्यायविश्वेश्वर॰ व्याख्यातं तत् 'अङ्गानि वेदाश्चत्वारः' इत्याथर्वणस्य पृथग्वेदत्वे त्वहानिः, त्व य्यन्तर्भावे तु नाष्टादशत्वसिद्धिः' इति चि॰ क्षयोः संसृष्टिः ॥ ५ ॥

दिगीशेति ॥ दिगीशवृन्दस्य इन्द्रादिदिक्पाल॰ मात्रास्तेषां विभूतिर्महिमा । 'अष्टाभिश्च सुरेन्द्राणां म॰ इति स्मरणादिति भावः । अत्र नलस्य विभूतेर्भेद॰ दिशामीशिता दिशामिति बहुवचनात् इन्द्रादीना॰ सर्वदिगीशत्वमिति व्यतिरेको व्यज्यते । स॰

॰त्यर्थः । ॰रनिपातः, ॰वनौ निजचाप- ॰। घनस्तद्धनः स सेवाशुगेन वायुना ॰तया व्ययितस्य निर्वा- ॰शिखिनः प्रतापाग्नेरङ्ग-

**पदैश्चतुर्भिः सुकृते स्थिरीकृते कृतेऽमुना के न तपः प्रपेदिरे ।**
**भुवं यदेकाङ्घ्रिकनिष्ठया स्पृशन् दधावधर्मोऽपि कृशस्तपस्विताम् ॥**

---

बलात्कारमवरुणद्धीति तथोक्ताम् । स्वेच्छावृत्तिनिवारिकामित्यर्थः । अन्यत्र कन्दर्पघ्नीमित्यर्थः । निजमात्मीयं यत् त्रिनेत्रावतरत्वं दिगीशांशप्रभवत्व-प्रयुक्तमीश्वरावतारत्वम् । तस्य बोधिकां ज्ञापिकाम् । तृतीयदृश ईश्वर-लक्षणत्वादिति भावः । अत्र "तृजकाभ्यां कर्तरि" इति कृद्योगलक्षण-समासस्यैव निषेधाच्छेषषष्ठीसमासः । "तत्प्रयोजकः" इति सूत्रकारादि-प्रयोगदर्शनादिति । शास्त्राणि श्रुतिस्मृत्यादीनि, द्वयाधिकां तृतीयां दृशमिति रूपकं, बभार । ईश्वरांशत्वं सिद्धमित्यर्थः । विशालाक्षोऽपि शास्त्रैरेव चक्षुष्मानासीदिति भावः । अवतर इत्यत्र "ऋदोः" इति अप्प्रत्ययस्तेन तरशब्देनावशब्दस्य "सुप् सुपा" इति समासः । न तूपसृष्टात्प्रत्ययोत्पत्तिः । "अवे तृस्त्रोर्घञ्" इति घञ्प्रत्ययप्रसङ्गात् । सति तु तस्मिन्नवतार इति स्यात् । अत्रोक्तयो रूपकातिशयोक्त्योः संसृष्टिः ॥ ६ ॥

पुवद्धा१

र्दशसङ्ख्या पदैरिति ॥ अमुना नलेन, कृते कृतयुगे, सुकृते धर्मे धर्मस्य वृष-
कथं वा स्वयं पदैः चरणैश्चतुर्भागैश्च स्थिरीकृते सति तपः के न प्रपेदिरे?
स्वयं करणं कथं एवेत्यर्थः । कुतः यत् यस्मात् , अधर्मोऽपि कृशः सन्
षट्पञ्चाशतः, कथंस्य कनिष्ठया अङ्गुल्या भुवं स्पृशन् । कृतेऽप्यधर्मस्य
विरोधाभासोऽलङ्कारः न स्पृशतीत्यर्थः । तपस्वितां तापसत्वं दीनत्वं च दधौ ।
इति लक्षणात् । फलवदः इति विश्वः । अस्य शासनादधर्मोऽपि धार्मि-
अमुष्येति ॥ अमुति भावः । अत एवार्थापत्तिरलङ्कारः, 'एकस्य
णीत्यर्थः ; "शिल्पिनि ष्वुन् ण भवेत् । कैमुत्यन्यायतः सा स्यादर्थापत्ति

यदस्य यात्रासु बलोद्धतं रजः स्फुरत्प्रतापानलधूममञ्जिम ।
तदेव गत्वा पतितं सुधाम्बुधौ दधाति पङ्कीभवदङ्कतां विधौ ॥ ८ ॥
स्फुरद्धनुर्निस्वनतद्धनाशुगप्रगल्भवृष्टिव्ययितस्य सङ्गरे ।
निजस्य तेजश्शिखिनः परश्शता वितेनुरिङ्गाल[1]मिवायशः परे ॥ ९ ॥

---

रलङ्क्रिया ॥' इति लक्षणात् । तेनाधर्मोऽपि धार्मिको भवतीति विरोधो व्यज्यते ॥ ७ ॥

यदिति ॥ अस्य नलस्य यात्रासु, बलोद्धतं सैन्योत्क्षिप्तं, स्फुरतः प्रतापस्यैवानलस्य यो धूमस्तस्येव मञ्जिमा मञ्जुत्वं यस्य तत्तथोक्तम् । "सप्तम्युपमाने" इत्यादिना बहुव्रीहिः । मञ्जुशब्दादिमनिच् । यद्रजः तदेव गत्वा सुधाम्बुधौ पतितं सत् पङ्कीभवत् द्रवद्रव्यमेलनात् पङ्कीभूतम् । विधौ चन्द्रे । अङ्कतां कलङ्कत्वं दधाति । पङ्कादुत्पन्नः पङ्किलो भवति पङ्किलत्वं चास्यान्यथा न सम्भवेदिति भावः । रूपकसंसृष्टा गम्योत्प्रेक्षा ॥ ८ ॥

स्फुरदिति ॥ सङ्गरे युद्धे, शतात्परे परश्शता अपरिमिता इत्यर्थः । 'पञ्चमी'इति योगविभागात्समासः । राजदन्तादित्वादुपसर्जनस्य परनिपातः, पारस्करादित्वात्सुडागमः । परे शत्रवः, स्फुरन्तौ धनुर्निस्वनौ निजचापतद्घोषावेव इन्द्रचापगर्जिते यस्य स तथोक्तः, स चासौ घनस्तद्धनः स नल एव घनस्तस्याशुगानां प्रगल्भवृष्टिर्महावृष्टिः । सैवाशुगेन वायुना प्रगल्भवृष्टिः । 'आशुगौ वायुविशिखौ' इत्यमरः । तया व्ययितस्य निर्वापितस्य । विपूर्वादयेः कर्मणि क्तः । निजस्य तेजश्शिखिनः प्रतापाग्नेरिङ्गा-

---

१. 'अङ्गारम्' इति पाठान्तरम् ।

**अनल्पदग्धारिपुरानलोज्ज्वलैर्निजप्रतापैर्वलयं ज्वलद्भुवः ।**
**प्रदक्षिणीकृत्य जयाय सृष्टया रराज नीराजनया स राजघः ॥ १० ॥**
**निवारितास्तेन महीतलेऽखिले निरीतिभावं गमितेऽतिवृष्टयः ।**
**न तत्यजुर्नूनमनन्यसंश्रयाः प्रतीपभूपालमृगीदृशां दृशः ॥ ११ ॥**

---

लमङ्गारमिवेत्युत्प्रेक्षा । देश्यशब्दोऽयम् । अयशोऽपकीर्तिं वितेनुः । 'अयशः श्यामम्' इति कविप्रसिद्धिः । निःसपत्नोऽयमिति भावः । रूपकोत्प्रेक्षयोः सङ्करः ॥ ९ ॥

**अनल्पेति** ॥ राज्ञो हन्तीति राजघः, शत्रुघातीत्यर्थः । 'राजघ उपसङ्ख्यानम्' इति निपातः । स नलः अनल्पं दग्धान्यारिपुराणि यैस्ते अनल्पदग्धारिपुराः, अत एव अनलवदुज्ज्वला अनलायमानास्तैर्निजप्रतापैरिव जयाय सृष्टया जयार्थयेत्यर्थः । नीराजनया आरार्तिकया ज्वलद्दीप्यमानं, भुवो वलयं प्रदक्षिणीकृत्य प्रदक्षिणं परिभ्रम्य रराज । अत्र ज्वलत्प्रतापानलो नलः दिग्जैत्रयात्रायां प्राच्यादिप्रादक्षिण्येन भूमण्डलं परिभ्रमन् निजप्रतापनीराजनया भूदेवतां नीराजयन्निव रराजेत्युत्प्रेक्षा । सा च व्यञ्जकाप्रयोगाद्गम्या । किञ्च प्रतापानलैर्नीराजनयेति प्रतापानलस्य नीराजनत्वरूपणमर्थादारिपुराणां वर्तित्वरूपणगमकमित्येकदेशविवर्ति, तदुत्थापिता चेयमुत्प्रेक्षेत्यनयोरङ्गाङ्गिभावेन सङ्करः ॥ १० ॥

**निवारिता इति** ॥ तेन नलेन, निरीतिभावं ईतिबाधारहितत्वं गमिते अखिले महीतले । निवारिता निष्कासिता अपि शरणं गता इति शेषः, अतिवृष्टयः अनन्यसंश्रया आश्रयान्तरशून्याः सत्यः प्रतीपभूपालमृगीदृशां शत्रुवधूनां दृशः चक्षूंषि न तत्यजुः । यथा निष्कासिता अपि

सितांशुवर्णैर्वयति स्म तद्गुणैर्महासिवेम्नः सहकृत्वरी बहुम् ।
दिगङ्गनाङ्गावरणं[1] रणाङ्गणे यशःपटं तद्भटचातुरीतुरी ॥ १२ ॥

प्रतीपभूपैरिव किं ततो भिया विरुद्धधर्मैरपि भेत्तृतोज्झिता ।
अमित्रजिन्मित्रजिदोजसा स यद्विचारदृक्चारदृगप्यवर्तत ॥ १३ ॥

---

शरणङ्गतास्तत्रैव तदाज्ञया कुत्रचित्तिष्ठन्ति तद्वदित्यर्थः । नूनमित्युत्प्रेक्षा । अरिविधात्तन्नार्यो निरन्तरं रुदन्तीति भावः । 'अतिवृष्टिरनावृष्टिर्मूषकाश्शलभाश्शुकाः । अत्यासन्नाश्च राजानष्षडेता ईतयः स्मृताः ॥' इति ॥ ११

सितांशुवर्णैरिति ॥ महासिरेव वेमा वायदण्डः । 'पुंसि वेमा वायदण्डः' इत्यमरः । तस्य सहकृत्वरी सहकारिणी । "सहे च" इति करोतेः क्वनिप् प्रत्ययः । "वनो र च" इति ङीप् रेफश्च । तस्य नलस्य भटानां चातुरी चातुर्यं सैव तुरी वयनसाधनविशेषः सैव कर्त्री सितांशोः चन्द्रस्येव वर्णो येषां तैः शुभ्रैरित्यर्थः । अन्यत्र सिताः शुक्ला अंशूना त-
मवयवानां वर्णाः कारणत्वेन येषां तैः कारणगुणपूर्वकैरित्यर्थः । न्यते:
तस्य नलस्य गुणाः शौर्यौदार्यादयः तैरेव गुणैः तन्तुभिः; श्लिष्टरू १६ ॥
दिशामेवाङ्गनानाम् अङ्गावरणं गात्रसंवरणं, बहुं महान्तं, यश निदर्श-
रणाङ्गणे वयति स्म ततान । रूपकालङ्कारः ॥ ११ ॥ राशि' इति

प्रतीपभूपैरिति ॥ प्रतीपभूपैः प्रतिपक्षराजैरिव, कि तु निर्बन्धेनेति
नवस्थायिधर्मैरपि, ततो नलाद्भिया भयेन, भेत्तृता स्वा ननाश्चाननूचानश्च"
त्यक्ता । किम्? कुत इति चेत्–यत् यस्मात् म् । न तु दुष्टैरिति
तेजसा, मित्रजित् सूर्यजिदपि, अमित्रजिन्मित्रा धशुक्राभ्यां सहेत्यर्थः ।

---

१. 'दिगङ्गनाङ्गाभरणम्' इति पाठान्तरम् ।

। समयं कालं नयन्

**तदोजसस्तद्यशसः स्थिताविमौ वृथेति चित्ते कुरुते यदा यदा ।**
**तनोति भानोः परिवेषकैतवात्तदा विधिः कुण्डलनां विधोरपि ॥**
**अयं दरिद्रो भवितेति वैधसीं लिपिं ललाटेऽर्थिजनस्य जाग्रतीम् ।**
**मृषा न चक्रेऽल्पितकल्पपादपः प्रणीय दारिद्र्यदरिद्रतां नलः ॥१५॥**

---

शत्रुजिदित्यविरोधः । चारदृक् 'राजानश्चारचक्षुषः' इति शास्त्रात् ; गूढचारचक्षुरपि । विचारदृक् चारदृक् न भवतीति विरोधः, विचारेण पश्यतीत्यविरोधः । अवर्तत । अपिर्विरोधे । अत एवायं विरोधाभासः अलङ्कारः । एतदुपजीवनेन विरुद्धधर्माणां स्वाश्रयभेदकत्वाभावोत्प्रेक्षा । सा च प्रतीपभूपैरिवेत्युपमानुप्राणितेति त्रयाणां सङ्करः ॥ १३ ॥

**तदोजस इति** ॥ तदोजसस्तत्प्रतापस्य, तद्यशसश्च स्थितौ सत्यां तयोः स्थितयोरित्यर्थः । इमौ वक्ष्यमाणौ भानुश्च विधुश्च वृथा व्यर्थाविति यदा यदा चित्ते कुरुते अनुसन्धत्ते । तदा तदेत्यर्थः । परिवेषस्य दीप्यमार्चिकत्वादिति भावः । विधिर्विधाता भानोर्विधोरपि परिवेषस्य ज्वलत्प्र कैतवान्मिषात् । 'परिवेषस्तु परिधिः' इत्यमरः । कुण्डलनां भ्रमन् न्त्रिां तनोति ? यथा लेखकोऽधिकाक्षरवर्जनायेति भावः । विजित-च व्यञ्जनस्य कीर्तिप्रतापाविति भावः । अत्र परिवेषमिषेण सूर्याचन्द्रमसोः नीराजनत्वरेक्षणात्सापह्नवोत्प्रेक्षा । सा च व्यञ्जकाप्रयोगाद्गम्या ॥ १४ ॥

त्थापिता चेयमुत्प्रे ॥ अल्पितकल्पपादपः त्यागशीलतया स्वल्पीकृत-
**निवारिता इ** र्थिजनस्य ललाटे जाग्रतीं प्रकाशमानाम् । अयं जनो
गमिते अखिले महीतले भविष्यतीत्येवंरूपाम् । वैधसीं वैधात्रीं, लिपिं
शेषः, अतिवृष्टयः अनन्‌रिद्रतां दारिद्र्यरहितत्वं, प्रणीय सम्पाद्य, मृषा
मृगीदृशां शत्रुवधूनां दृःसनस्यान्यथाकर्तुमशक्यत्वात् कथञ्चिदस्याप्यर्थ-

विभज्य मेरुर्न यदर्थिसात्कृतो न सिन्धुरुत्सर्गजलव्ययैर्मरुः ।
अमानि तत्तेन निजायशोयुगं द्विफालबद्धाश्चिकुराः शिरःस्थितम्॥१६॥
अजस्रमभ्याशमुपेयुषा समं मुदैव देवः कविना बुधेन च ।
दधौ पटीयान् समयं नयन्नयं दिनेश्वरश्रीरुदयं दिने दिने ॥ १७ ॥

---

वत्तां सम्पादितवानित्यर्थः । ब्रह्मलिखितमप्यन्यथाकर्तुं क्षमोऽयमिति भावः । एवङ्करणासम्बन्धेऽपि सम्बन्धोक्तेरतिशयोक्तिभेदः ॥ १५ ॥

**विभज्येति** ॥ मेरुः हेमाद्रिः, विभज्य भागीकृत्य, अर्थिसादर्थ्यधीनः । "देये त्रा च" इति सातिप्रत्ययः । न कृतः । सिन्धुः अब्धिः, उत्सर्गजलव्ययैर्दानाम्बुविनियोगैः, मरुः निर्जलदेशो न कृत इति यत् । तेन नलेन तत्पूर्वोक्तं निजायशोयुगमपकीर्तिद्वयम् । द्वयोः फालयोः शिरोभागयोर्बद्धाः संयताः । फलतेर्विशरणार्थाद्धञ् प्रत्ययः । प्रायेणोदीच्यानां पुंसामपि सीमन्तिनशिरोरुहत्वात् द्विफालबद्धा इत्युक्तम् । एवं द्विधा विभक्ताः चिकुराः शिरोरुहा , तत् शिरःस्थितममानि । द्विधाकृतकशरूपेण अयशोयुगलमेव स्वशिरसि तिष्ठतीत्यमन्यतेत्यर्थः । मन्यतेः कर्मणि लुङ् । केशेषु काष्र्ण्यसाम्येनायशोरूपणाद्रूपकालङ्कारः ॥ १६ ॥

**अजस्रमिति** ॥ दिनेश्वरस्य श्रीरिव श्रीः यस्य स इति निदर्शनालङ्कारः । पटीयानयं देवो राजा सूर्यश्च । 'देवः सूर्ये यमे राज्ञि' इति विश्वः । अजस्रमनिशं, मुदा सम्मानकृतसन्तोषेणैव । न तु निर्बन्धेनेति भावः । अभ्याशं समीपमुपेयुषा प्राप्तवता । "उपेयिवाननाश्वाननूचानश्च" इति निपातः । कविना कविभिर्बुधेन बुधैश्च समम् । न तु दुष्टैरिति भावः । उभयत्र जात्येकवचनम् । अन्यत्र बुधशुक्राभ्यां सहेत्यर्थः । तत्साहचर्यं सूर्यस्य ज्योतिश्शास्त्रादवगन्तव्यम् । समयं कालं नयन्

**तलेधोविधानात् कमलप्रवालयोः शिरस्सु धानादखिलक्षमाभुजाम् ।**
**पुरेदमूर्ध्वं भवतीति वेधसा पदं किमस्याङ्कितमूर्ध्वरेखया ॥ १८ ॥**
**जगज्जयं तेन च कोशमक्षयं प्रणीतवान् शैशवशेषवानयम् ।**
**सखा रतीशस्य ऋतुर्यथा वनं वपुस्तथालिङ्गदथास्य यौवनम् ॥१९॥**

---

यापयन् । दिने दिने प्रत्यहमुदयमाविर्भावं, दधौ । अत्र निदर्शन-श्लेषयोः सङ्करः ॥ १७ ॥

**अध इति ॥** कमलप्रवालयोः पद्मपल्लवयोः कर्मणोः । अधो-विधानात् अधःकरणात्तिरस्करणाच्चेति सौन्दर्यातिशयोक्तिः । अखिल-क्षमाभुजां सर्वेषामरिभूभुजामिति भावः । शिरस्सु धानान्निधानादिति शौर्या-तिशयोक्तिः । इदमस्य नलस्य, पदं चरणमूर्ध्वमुत्कृष्टमुपरिस्थञ्च । पुरा भवति भविष्यति । "यावत् पुरा निपातयोर्लट्" इति भविष्यदर्थे लट् । इतीत्थम् । मत्वेति शेषः । गम्यमानार्थत्वादप्रयोगः । वेधसा कर्त्रा । ऊर्ध्वरेखयाङ्कितम् । सौन्दर्यशौर्याभ्यां सर्वोत्तरं भविष्यतीति ज्ञापनार्थं चिह्नितं किमित्युत्प्रेक्षा । ऊर्ध्वरेखाङ्कितपादः सर्वोत्तरो भवतीति सामुद्रिकाः ॥ १८ ॥

एवमस्य गुणाद्भुतत्वमभिधायाधुना वक्ष्यमाणकथोपयोगितयास्य यौवनप्राप्तिमाह—जगदिति ॥ अयं नलः शैशवशेषवान् ईषदवशिष्टशैश-वावस्थ एव, जगज्जयं प्रणीतवान् । तेन जगज्जयेन, अक्षयं कोशमर्थजातं च प्रणीतवान् सम्पादितवान् । अथ रतीशस्य सखा मदनमित्रम् । ऋतु-र्वसन्तो, वनं यथा, तथा यौवनमस्य वपुरालिङ्गत् आश्लिष्यत् । सङ्क्रान्त-मित्यर्थः । रतीशस्य इत्यत्र "ऋत्यकः" इति सूत्रेण पाक्षिकः प्रकृति-भावः । उपमालङ्कारः ॥ १९ ॥

---

'दानात्' इति पाठान्तरम् ।

 

अधारि पद्मेषु तदङ्घ्रिणा घृणा क्व तच्छयच्छायलवोऽपि पल्लवे ।
तदास्यदास्येऽपि गतोऽधिकारितां न शारदः पार्विकशर्वरीश्वरः ॥

किमस्य रोम्णां कपटेन कोटिभिर्विधिर्न रेखाभिरजीगणद्गुणान् ।
न रोमकूपौघमिषाज्जगत्कृता कृताश्च किं दूषणशून्यबिन्दवः ॥ २१ ॥

---

अथ यौवनं वर्णयति—**अधारीति** ॥ तदङ्घ्रिणा तच्चरणेन, पद्मेषु विषये । घृणा जुगुप्सा, अवज्ञेति यावत् । 'घृणा जुगुप्साकृपयोः' इति विश्वः । अधारि धृता । तेषामतिनीचत्वादिति भावः । पल्लवे किसलये । तच्छयस्य तत्पाणेश्छाया ; तच्छयच्छायम् । 'पञ्चशाखश्शयः पाणिः' इत्यमरः । "विभाषा सेना-" इत्यादिना समासे छायाशब्दस्य नपुंसकत्वम् । तस्य लवो लेशोऽपि, क्व कुतः, न क्वचिदित्यर्थः । शरदि भवः शारदः । "सन्धिवेलाद्यृतुनक्षत्रेभ्यः" इत्यण् । पर्वणि भवः पार्विकः । कालाट्ठञ्, "नस्तद्धिते" इति टिलोपः । स चासौ शर्वरीश्वरः चन्द्रः । तदास्य-दास्ये नलमुखकैङ्कर्येऽप्यधिकारितां योग्यतां न गतः अतोऽस्य पाद-पाणिमुखमप्रतिममिति भावः । अत्राङ्घ्र्यादीनां पद्मादिषु घृणासम्बन्धेऽपि संबन्धोक्तेरतिशयोक्तिः ॥ २० ॥

**किमिति** ॥ विधिर्वेधाः, अस्य नलस्य, गुणान् रोम्णां कपटेन मिषेण, कोटिभिः रेखाभिः, नाजीगणत् न गणितवान् किम् ? "ई च गणः" इति गणेरभ्यासस्येकारः, गणर्णौ चङ् । जगत्कृता विधात्रा, रोमकूपाना-मोघस्य मिषात्, दूषणानां दोषाणां, शून्यस्यात्यन्ताभावस्य बिन्दवो ज्ञाप-कवर्तुलरेखाः, न कृताः किम् अस्मिन् गुणा एव, दोषा न सन्तीति भावः । अत्र रोम्णां रोमकूपानां च कपटमिषशब्दाभ्यां ताद्रूप्यापह्नवेन गुणगणना-

अमुष्य दोर्भ्यामरिदुर्गलुण्ठने ध्रुवं गृहीतार्गलदीर्घपीनता ।
उरःश्रिया तत्र च गोपुरस्फुरत्कवाटदुर्धर्षतिरःप्रसारिता ॥ २२ ॥

स्वकेलिलेशस्मितनिर्जितेन्दुनो[1] निजांशदृक्तर्जितपद्मसम्पदः ।
अतद्द्वयीजित्वरसुन्दरान्तरे न तन्मुखस्य प्रतिमा चराचरे ॥ २३ ॥

---

रेखात्वदूषणशून्यबिन्दुत्वयोरुत्प्रेक्षणात् सापह्नवोत्प्रेक्षयोः संसृष्टिः ॥ २१ ॥

**अमुष्येति** ॥ अमुष्य नलस्य, दोर्भ्यामरिदुर्गाणां लुण्ठने भञ्जने अर्गलानां कवाटविष्कम्भदारूणाम् । 'तद्विष्कम्भेऽर्गलं न ना' इत्यमरः । दीर्घाणि च तानि पीनानि च तेषां भावो दीर्घपीनता आयतपीवरत्वं गृहीता ध्रुवम्, किञ्च अमुष्योरःश्रिया वक्षोलक्ष्म्या कर्त्र्या च । तत्र अरिदुर्गलुण्ठने गोपुरेषु पुरद्वारेषु स्फुरतां कवाटानां दुर्धर्षाणि च तिरःप्रसारीणि च तेषां भावस्तत्ता, अप्रधृष्यत्वं विशालत्वञ्चेत्यर्थः । सा गृहीता ध्रुवम्; अर्गलदीर्घबाहुरयं कवाटवक्षाश्चेति भावः । अत्राप्युत्प्रेक्षयोः संसृष्टिः ॥ २२ ॥

**स्वकेलीति** ॥ स्वकेलिलेशेन स्वलीलाशकलेन, स्मितेन निर्जितेन्दुनो निराकृतचन्द्रस्य, निजांशेन स्वावयवेन, दृशा दृष्ट्या, तर्जितपद्मसम्पदः भर्त्सितकमलसौन्दर्यस्य, तन्मुखस्य तयोः चन्द्रारविन्दयोः, द्वयी युगं, तस्या जित्वरं जिष्णुतरं, सुन्दरान्तरं यत्र नास्ति तस्मिन् चराचरे जगति । 'चराचरं स्याज्जगति' इति विश्वः । प्रतिमा उपमा नास्तीत्यर्थः । अस्तिर्भवन्तीपरोऽप्रयुज्यमानोऽप्यस्तीति वचनात् । अत्र चन्द्रारविन्दविजयस्य विशेषणगत्या नलमुखाप्रतिमानहेतुत्वात् पदार्थहेतुकं

---

१. 'निन्दितेन्दुनः' इति पाठान्तरम् ।

तस्य दृशैव निर्जितं[1] जिताः स्मितेनैव विधोरपि श्रियः ।
सरोरुहं भव्यमहो महीयसी तदाननस्योपमितौ दरिद्रता ॥ २४ ॥
कुतः प॰ रस्य तदुत्तमाङ्गजैः स्वयं[2] चमर्यैव तुलाभिलाषिणः ।
स्ववाल॰ रसति वालचापलं पुनः पुनः पुच्छविलोलनच्छलात् ॥
अनागस॰

——लङ्कारः ॥ २३ ॥
काव्यलिङ्ग॰ मेवार्थं भङ्गयन्तरेणाह—सरोरुहमिति ॥ तस्य दृशैव सरोरुहं
स्मितेन मन्दहासेनैव, विधोरिन्दोः, श्रियः कान्तयोऽपि जिताः,
निर्जितम् यद्भव्यं रम्यं वस्तु कुतः ? न कुत्रापीत्यर्थः । तदाननस्योपमितौ
परं आभ्या॰ यसी गरीयसी, दरिद्रता नास्तिता, अहो ! अत्रापि चन्द्रार-
उपमाने॰ य वाक्यार्थस्य मुखोपमानदारिद्र्यहेतुत्वाद्वाक्यार्थहेतुक काव्य-
विन्दाक्ति॰ २४ ॥
लिङ्गम वि॰
अ॰ वालेति ॥ चमरी मृगविशेषः । स्वयमेव तदुत्तमाङ्गजैर्नलमूर्धजैः
स्व॰ ः साम्याभिलाषलक्षणापराधिन इत्यर्थः । जघन्यस्य उत्तम-
तुलाभि॰ नेम साम्याभिमानोऽपि महानपराध इति भावः । स्ववालभारस्य
जन्मभि॰ चि॰ स्य, अनागसे अनपराधाय । क्वचित् तदभावेऽपि नञ्समास
निजरो॰ नास॰ पुनः पुच्छस्य विलोलनच्छलाद्विलोलनव्याजात् . वालचापलं .
इष्यते ।
रोमचा॰ नेति ॥ का स्त्री निशि स्वप्नगतं स्वप्नलब्धमित्यर्थः । तं नलं
सोढव्या॰ । गोत्रस्खलिते नामविपर्यासे च तं का न जगाद नाजुहावे-
वालबा॰ ते च का वा तदात्मतया नलात्मकत्वेन ध्यातधवा भावित-
—— सती । स्वस्य मनोभवोद्भवं मन्मथोद्रेकं न चकार । सर्वापि
इत्यर्थः । कामान्धाः किं न कुर्वन्तीति भावः । अत्रापि

**महीभृतस्तस्य च मन्मथश्रिया निजस्य चित्तस्य च तं प्रतीच्छया ।**
**द्विधा नृपे तत्र जगत्त्रयीभुवां नतभ्रुवां मन्मथविभ्रमोऽभवत् ॥ २६ ॥**
**निमीलनभ्रंशजुषा दृशा भृशं निपीय तं यस्त्रिदशीभिरर्जितः ।**
**अमूस्तमभ्यासभरं विवृण्वते निमेषनिःस्वैरधुनापि लोचनैः ॥ २७ ॥**
**अदस्तदाकर्णि फलाढ्यजीवितं दृशोर्द्वयं नस्तदवीक्षि चाफलम् ।**
**इति स्म चक्षुश्श्रवसां प्रिया नले स्तुवन्ति निन्दन्ति हृदा तदात्मनः ॥**

अथास्य यौवनप्रवेशफलं प्रस्तौति—**महीभृत इति** ॥ तस्य महीभृतो नलस्य, मन्मथस्येव श्रिया सौन्दर्येण च, निजस्यात्मीयस्य, चित्तस्य तं नलं प्रतीच्छया रागेण च, तत्र तस्मिन् नृपे विषये, जगत्त्रयीभुवां लोकत्रयवर्तिनीनां, नतभ्रुवाम् । द्विधा द्वेधा, मन्मथविभ्रमोऽभवत् तत्सौन्दर्यान्मन्मथभ्रान्तिः सानुरागान्मन्मथविकारश्च अभूदित्यर्थः । तिरस्कातिशायि सौन्दर्यमस्येति भावः । अत्र नलश्रीविश्ववनितेच्छयोः सा रूपदोपात्तविभ्रमद्वयेन यथासङ्ख्यं सम्बन्धात् श्लेषसङ्कीर्णो प्राप्युक्तसङ्ख्यालङ्कारः ॥ २६ ॥

**निमीलनेति** ॥ त्रिदशीभिः सुराङ्गनाभिः, निमीलनभ्रंशजुषा निमेषनिवृत्तिभाजा ; निर्निमेषयेत्यर्थः । दृशा दृष्ट्या, तं, तर्हि, भृशं निपीय; गाढं दृष्ट्वेत्यर्थः । योऽभ्यासभरः अर्जितः कृतः । अरविन्दयोर्दृश्यः, ... तस्या ... जगति । 'चराचरं स्याज्जगति' इति विश्वः । प्रतिमा उपमा ... नल... त्यर्थः । अस्तिर्भवन्तीपरोऽप्रयुज्यमानोऽप्यस्तीति वचनात् । अत्र ... प्रयो... विन्दविजयस्य विशेषणगत्या नलमुखाप्रतिमानहेतुत्वात् पदा...

१. 'निन्दितेन्दुनः' इति पाठान्तरम । ...: इदं,

**विलोकयन्तीभिरजस्रभावनाबलादमुं नेत्रनिमीलनेष्वपि ।**
**अलम्भि मर्त्याभिरमुष्य दर्शने न विघ्नलेशोऽपि निमेषनिर्मितः ॥**
**न का निशि स्वप्नगतं ददर्श तं जगाद गोत्रस्खलिते च का न तम् ।**
**तदात्मताध्यातधवा रते च का चकार वा न स्वमनोभवोद्भवम् ॥**

---

नोऽस्माकं, दृशोर्द्वयं चक्षुषोर्युगम् । तं नलमाकर्णयतीति तदाकर्णि सत् । तासां चक्षुःश्रवस्त्वादिति भावः । फलाढ्यजीवितं सफलजीवितम् । न वीक्षत इत्यवीक्षि । अत्रापि ताच्छील्ये णिनिः । तस्यावीक्षि तदवीक्षि तदपश्यत्सत्, अफलञ्चेत्येवम् । नले विषये तदा नलकाले, आत्मनः स्वान्, हृदा चित्तेन, स्तुवन्ति स्म निन्दन्ति स्म । उभयकारणसम्भवादुभयकार्योदय इति भावः । ईदृङ्निन्दास्तुत्यसम्बन्धेऽपि सम्बन्धोक्तेरतिशयोक्तिः ॥ २८ ॥

विलोकयन्तीभिरिति ॥ अजस्रभावनाबलान्निरन्तरध्यानप्रभावात्, अमुं नलं, नेत्रनिमीलनेषु निमेषावस्थास्वपि, विलोकयन्तीभिरुन्मेषावस्थास्विव साक्षात्कुर्वन्तीभिः, मर्त्याभिर्मानुषीभिः, अमुष्य नलस्य, दर्शने निमेषनिर्मितो निमीलनकृतो विघ्नलेशोऽपि नालम्भि नालाभि । "विभाषा चिण्णमुलोः" इति विकल्पान्नुमागमः । अत्र मर्त्यानां सर्वावस्थालोकनासम्बन्धेऽपि तत्कथनादतिशयोक्तिः ॥ २९ ॥

नेति ॥ का स्त्री निशि स्वप्नगतं स्वप्नलब्धमित्यर्थः । तं नलं न ददर्श । गोत्रस्खलिते नामविपर्यासे च तं का न जगाद नाजुहावेत्यर्थः । रते च का वा तदात्मतया नलात्मकत्वेन ध्यातधवा भावितनिजप्रिया सती । स्वस्य मनोभवोद्भवं मन्मथोद्रेकं न चकार । सर्वापि सर्वं चकारेत्यर्थः । कामान्धाः किं न कुर्वन्तीति भावः । अत्रापि

**श्रियास्य योग्याहमिति स्वमीक्षितुं करे तमालोक्य सुरूपया धृतः ।**
**विहाय भैमीमपदर्पया कया न दर्पणः श्वासमलीमसः कृतः ॥ ३१ ॥**

**यथोह्यमानः खलु भोगभोजिना प्रसह्य वैरोचनिजस्य पत्तनम् ।**
**विदर्भजाया मदनस्तथा मनोऽनलावरुद्धं वयसैव वेशितः ॥ ३२ ॥**

दर्शनाद्यसम्बन्धेऽपि सम्बन्धोक्तेरतिशयोक्तिः ॥

**श्रियेति** ॥ तं नलमालोक्य श्रिया रामणीयकेन । अहमस्य योग्या अनुरूपेति स्वमात्मानम् ईक्षितुं परीक्षितुं करे धृतो दर्पणः, सुरूपया रम्ययैव नाहमस्य योग्येति बुद्ध्यमानया च । 'प्राप्तरूपे बुधे रम्येऽप्यभिरूपः सुरूपवत्' इति विश्वः । अत एवापदर्पया विगताहङ्कारया कया स्त्रिया । भैमीं विहाय दमयन्तीं वर्जयित्वा श्वासैर्मुखनिश्वासैः मलीमसो मलिनः । "ज्योत्स्ना तमिस्रा" इत्यादिना निपातः । न कृतः ? सर्वयापि कृत एवेत्यर्थः । दर्पणे निजवैरूप्यदर्शनात् अतिसुन्दर्योऽपि तदभिलाषचापलाल्लज्जिता इति भावः । अत्रापि सर्वासामेवंविधव्यापारासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिः ॥ ३१ ॥

एवं नलस्य लोकोत्तरसौन्दर्यद्योतनाय स्त्रीमात्रस्य तं प्रत्यनुरागमुक्त्वा सम्प्रति दमयन्त्यास्तमाह—**यथेति** ॥ मदनः प्राक् प्रद्युम्नावतार इति भावः । भोगभोजिना सर्पकायखादिना । वयसा खगेन गरुडेन ऊह्यमान ऊढः सन् । वहेः कर्मणि यकि सम्प्रसारणे पूर्वरूपम् । अनलावरुद्धमग्निपरिवेष्टितम् । विरोचनस्यापत्यं पुमान् वैरोचनिः बलिः तज्जस्य बाणासुरस्य पत्तनं प्रसह्य यथा वेशितः प्रवेशितः खलु । "ततो गरुडमारुह्य स्मृतमात्रो गतो हरिः । बल-

**नृपेऽनुरूपे निजरूपसम्पदां दिदेश तस्मिन् बहुशः श्रुतिं गते ।**
**विशिष्य सा भीमनरेन्द्रनन्दिनी मनोभवाज्ञैकवशंवदं मनः ॥ ३३ ॥**

प्रद्युम्नसहितो बाणस्य प्रययौ पुरीम् ॥" इत्युषाहरणे विष्णुपुराणात् । तथा नलावरुद्धं नलाक्रान्तम् । विदर्भजायाः दमयन्त्याः मनः भोगभोजिना सुखभोजकेन । 'भोगः सुखे स्त्र्यादिभृतावहेश्च फणकाययोः' इत्यमरः । भुजेर्ण्यर्न्ताण्णिनिः । वयसा यौवनेनैव कर्त्रा । खगेनेवेति गम्यते । 'खगबाल्यादिनोर्वयः' इत्यमरः । ऊह्यमानः परैस्तर्क्यमाणः । न तूक्त्या गृह्यमाणः । ऊहेर्वितर्कार्थात्कर्मणि यक् । वेशितः प्रवेशितः । रागिणां चेतसि यौवनमेव मदनदोहनमिति भावः । अत्र यथोह्यमानः, मनोनलेति च शब्दश्लेषः । अन्यत्र अर्थश्लेषः । श्लिष्टविशेषणा चेयमुपमा । सा च वयसेति वयसोरभेदाध्यवसायमूलातिशयोक्त्यनुप्राणितेति सङ्करः ॥ ३२ ॥

इह विरहिणां चक्षुःप्रीत्यादयो दशावस्थाः सन्ति । तत्र चक्षुःप्रीतिः श्रवणानुरागस्योपलक्षणम् । अतस्तत्पूर्विकां मनःसङ्गाख्यां द्वितीयावस्थामाह—**नृप इति** ॥ सा भीमनरेन्द्रनन्दिनी दमयन्ती । नन्द्यादित्वाल्ल्युप्रत्ययः । निजरूपसम्पदां स्वलावण्यसम्पत्तीनां अनुरूपे । बहुशो बहुभ्य इत्यर्थः । "बह्वल्पार्थाच्छस् कारकादन्यतरस्याम्" इत्यपादानार्थे शस् प्रत्ययः । श्रुतिं श्रवणं गते । एतेन श्रवणानुराग उक्तः । तस्मिन्नृपे नले मनोभवाज्ञाया एकवशंवदं एकस्यैव विधेयं, शिवभागवतवत्समासः । "प्रियवशे वदः खच्" । "अरुर्द्विषत्" इत्यजन्तस्य मुम् । मनो विशिष्य दिदेश । अस्येदम् इति निश्चित्य अतिससर्जेत्यर्थः । तद्गुणश्रवणात्तदासक्तचित्ताभूदित्यर्थः ॥ ३३ ॥

**उपासनामेत्य पितुः स्म रज्यते दिने दिने सावसरेषु वन्दिनाम् ।**
**पठत्सु तेषु प्रति भूपतीनलं विनिद्ररोमाजनि शृण्वती नलम् ॥ ३४ ॥**

**कथानुषङ्गेषु मिथः सखीमुखात्तृणेऽपि तन्व्या नलनामनि श्रुते ।**
**द्रुतं विधूयान्यदभूयतानया मुदा तदाकर्णनसज्ञकर्णया ॥ ३५ ॥**

---

अथास्याः श्रवणानुरागमेव चतुर्भिर्वर्णयति—**उपासनामिति** ॥ सा भैमी दिने दिने प्रतिदिनम् । "नित्यवीप्सयोः" इति वीप्सायां द्विर्भावः । वन्दिनां स्तुतिपाठकानामवसरेषु पितुरुपासनां सेवाम्, एत्य प्राप्य, तेषु वन्दिषु भूपतीन् प्रति भूपतीनुद्दिश्य पठत्सु सत्सु स्तुतिविशेषैर्नलं शृण्वती अलं रज्यते स्म अनुरक्ताऽभूदित्यर्थः । रञ्जेर्दैवादिकाल्लट् । अत एव विनिद्ररोमा हृष्टरोमा अजनीति सात्त्विकोक्तिः । जनेः कर्तरि लुङ् । "दीपजन-" इत्यादिना च्लेश्चिणादेशः । नलगुणश्रवणजन्यो रागस्तस्या रोमाञ्चेन व्यक्तोऽभूदित्यर्थः ॥ ३४ ॥

**कथानुषङ्गेष्विति** ॥ मिथोऽन्योन्यम्, रहसि वा । कथानुषङ्गेषु विस्रम्भगोष्ठीप्रसङ्गेषु सखीमुखान्नलनामनि नलाख्ये तृणेऽपि । 'नलः पोटगले राज्ञि' इति विश्वः । श्रुते अनया तन्व्या दमयन्त्या द्रुतमन्यत्कार्यान्तरं विधूय निराकृत्य मुदा हर्षेण तदाकर्णने नलशब्दाकर्णने । सज्ञकर्णया दत्तकर्णया अभूयत अभावि । भुवो भावे लङ् । अर्थान्तरे प्रयुक्तोऽपि नलशब्दो नृपस्मारकतया तदाकर्षकोऽभूदिति रागातिशयोक्तिः ॥ ३५ ॥

---

१. 'कथाप्रसङ्गेषु' इति पाठान्तरम् ।

**स्मरात्परासोरनिमेषलोचनाद्बिभेमि तद्भिन्नमुदाहरेति सा ।
जनेन यूनः स्तुवता तदास्पदे निदर्शनं नैषधमभ्यषेचयत् ॥ ३६ ॥**

**नलस्य पृष्टा निषधागता गुणान् मिषेण दूतद्विजवन्दिचारणाः ।
निपीय तत्कीर्तिकथामथानया चिराय तस्थेऽभिमनायमानया[१] ॥३७**

**स्मरादिति** ॥ परासोर्मृतात् । अत एव अनिमेषलोचनात् निश्चलाक्षाद्देवादिति च गम्यते। उभयथापि भयहेतूक्तिः । स्मराद्बिभेमि। तद्भिन्नं ततोऽन्यमुदाहर तत्सदृशं निदर्शय, इत्येवं सा दमयन्ती, यूनः स्तुवता जनेन प्रयोज्यकर्त्रा तदास्पदे तत्स्थाने निदर्शनं दृष्टान्तं नैषधं निषधानां राजानं नलम् ।[२]जनपदशब्दात् क्षत्रियादञ् । अभ्यषेचयत् । परासोः स्थाने तत्सदृश एवाभिषेक्तव्यः, स च नलादन्यो नास्तीति तस्मिन्नेवोदाहृते सहर्षं शृणोतीति रागातिशयोक्तिः । "[३]उपसर्गात् सुनोति-" इत्यादिना अड्व्यवायेऽपि षत्वम् ॥ ३६ ॥

**नलस्येति** ॥ निषधेभ्य आगताः दूताः सन्देशहराः, द्विजाः ब्राह्मणाः, वन्दिनः स्तावकाश्चारणा देशभ्रमणजीविनः । ते सर्वे मिषेण केनचिद्व्याजेन नलस्य गुणान् पृष्टाः । पृच्छतेर्दुहादित्वादप्रधाने कर्मणि क्तः । अथ प्रश्नानन्तरम् । अनया भैम्या, तत्कीर्तिकथां नलयशः-

---

१. 'विमनायमानया' इति पाठान्तरम् । अस्मिंस्तु पाठे—ईदृग्गुणो राजा मया कथं लभ्येत इति मत्वा तया विमनायमानया स्थितमित्यर्थः ।

२. इदं चिन्त्यम् । तदपवादभूतेन "कुर्वादिभ्यो ण्यः" इत्यनेन तस्य बाधात् नैषध्य इति रूपस्यैव न्याय्यत्वात् । अतः शैषिकेण अणा नैषधशब्दस्य निष्पत्तिर्वक्तव्या ।

३. "प्राक्सितादड्व्यवायेऽपि" इत्यनेन षत्वमिति भावः ।

**प्रियं प्रियां च त्रिजगज्जयिश्रियौ लिखाधिलीलागृहभित्ति कावपि ।**
**इति स्म सा कारुवरेण लेखितं नलस्य च स्वस्य च सख्यमीक्षते ॥३८॥**
**मनोरथेन स्वपतीकृतं नलं निशि क्व सा न स्वपती स्म पश्यति ।**
**अदृष्टमप्यर्थमदृष्टवैभवात्करोति सुप्तिर्जनदर्शनातिथिम् ॥ ३९ ॥**

---

कथामृतं, निपीय नितरां श्रुत्वेत्यर्थः । चिराय अभिमना हृष्टा भवतीत्यभिमनायमाना तया । भृशादित्वात् क्यङ् सलोपश्च । "अकृत्सार्वधातुकयोः" इति दीर्घः । ततो लटश्शानजादेशः । तस्थे स्थितम् । तिष्ठतेर्भावे लिट् । अयञ्च दूतादिव्यवधानेन गुणकीर्तनलक्षणः प्रलापाख्यो रत्यनुभाव ॥ ३७ ॥

अ० प्रतिकृतिस्वप्नदर्शनादयो विरहिणां विनोदोपायाः । अतस्तत्कथनमुखेन दर्शनानुरागं चास्या दर्शयन् प्रतिकृतिदर्शनं तावदाह—**प्रियमिति** ॥ सा भैमी, त्रीणि जगन्ति समाहृतानि त्रिजगत् । समाहारे द्विगुरेकवचनम् । तस्य जायिनौ । "जिदृक्षि" इत्यादिना इनिः । सा श्रीः शोभा ययोस्तौ तथोक्तौ । का च कश्च कावपि । "पुमान् स्त्रिया" इत्येकशेषः । प्रियं प्रियाञ्च, कामिनावित्यर्थः । लीलागृहभित्ताविति अधिलीलागृहभित्ति विलासवेश्मकुड्ये । विभक्त्यर्थेऽव्ययीभावः । लिखेति नियुज्येति शेषः । गम्यमानार्थत्वादप्रयोगः, प्रयोगे पौनरुक्त्यदोष इत्यालङ्कारिकाः । कारुवरेण शिल्पिविशेषेण प्रयोज्येन लेखितं नलस्य च स्वस्य च द्वयोरेव तथात्वादिति भावः । सख्यं रूपसाम्यम् ईक्षते स्म । लिखितादिव्यवधानेन गुणकीर्तनलक्षणः प्रलापाख्यो रत्यनुभावः ॥३८॥

द्विविधं दर्शनम्, साक्षाच्चित्रादौ च । तत्र साक्षादलाभाच्चित्रदर्शनमुक्तम् । अथ द्वाभ्यां स्वप्नदर्शनमाह—**मनोरथेनेति** ॥ सा भैमी

**निमीलितादक्षियुगाच्च निद्रया हृदोऽपि बाह्येन्द्रियमौनमुद्रितात् ।**
**अदर्शि सङ्गोप्य कदाप्यवीक्षितो रहस्यमस्याः स महन्महीपतिः ॥४०**

मनोरथेन सङ्कल्पेन स्वपतीकृतं स्वभर्तृकृतम् । "अभूततद्भावे च्विः" । "च्वौ" इति दीर्घः । नलं क कस्यां निशि । स्वपती निद्रावती सती न पश्यति स्म ? सर्वत्रापि निशि अपश्यदेवेत्यर्थः । तत्र सन्तं तं कथमद्राक्षीदित्याशङ्क्य समर्थयति—**अदृष्टमपीति** ॥ सुप्तिः स्वप्नः अदृष्टमत्यन्ताननुभूतमप्यर्थम् । किमुत श्रुतमिति भावः । अदृष्टवैभवात् प्राक्तनभाग्यबलात् । जनदर्शनातिथिं लोकदृष्टिविषयं करोति । तद्वदत्रापि तन्निमित्तादृष्टात्तादृक्स्वप्नज्ञानमुत्पन्नमित्यर्थः । सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ॥ ३९ ॥

**निमीलितादिति** ॥ निद्रया पर्योजिकया । निमीलितात् मुकुलितात्, उपरतव्यापारादित्यर्थः । अक्षियुगाच्च तथा बाह्येन्द्रियाणां चक्षुरादीनां मौनेन व्यापारोपरमेण मुद्रितात् प्रतिबद्धान्मनसो बहिरस्वातन्त्र्यात् । हृदो हृदयादपि सङ्गोप्यापवार्य, वञ्चयित्वेत्यर्थः । "अन्तर्धौ येनादर्शनमिच्छति" इत्यक्षियुगमनसोरपादानत्वम् । अदर्शनञ्चात्र मनसो बाह्येन्द्रियमौनमुद्रितादिति विशेषणसामर्थ्यादिन्द्रियार्थसम्प्रयोगजन्यज्ञानविरह एवेति ज्ञायते । स्वप्नज्ञानं तु मनोजन्यमेव । अत्र तज्जन्यस्य ज्ञानस्यैवाभाव इत्याह कदाप्यवीक्षित इति । अत्यन्तादृष्टचर इत्यर्थः । महद्रहस्यमतिगोप्यं वस्तु । स महीपतिः नलः । अस्याः भैम्याः, अदर्शि दर्शयाञ्चक्रे । दृशेर्ण्यन्तात् कर्मणि लुङ् । यथा काचिच्चेटी कस्यैचित्कामिन्यै कञ्चन कान्तं सङ्गोप्य दर्शयति तद्वदिति भावः ॥ ४० ॥

**अहो अहोभिर्महिमा हिमागमेऽप्यतिप्रपेदे प्रति तां स्मरार्दिताम् ।**
**तपर्तुपूर्तावपि मेदसां भरा विभावरीभिर्बिभराम्बभूविरे ॥ ४१ ॥**
**स्वकान्तिकीर्तिव्रजमौक्तिकस्रजः श्रयन्तमन्तर्घटनागुणश्रियम् ।**
**कदाचिदस्या युवधैर्यलोपिनं नलोऽपि लोकादश्रृणोद्गुणोत्करम् ॥४२**
**तमेव लब्ध्वावसरं ततः स्मरः शरीरशोभाजयजातमत्सरः ।**
**अमोघशक्त्या निजयेव मूर्तया तया विनिर्जेतुमियेष नैषधम् ॥४३**

---

अथास्याः चिन्ताजागरावाह—**अहो इति** ॥ हिमागमे हेमन्तेऽपि स्मरार्दितां स्मरपीडितां तां दमयन्तीं प्रति अहोभिर्दिवसैर्गतिमहिमा अतिवृद्धिः प्रपेदे । तथा तपर्तुपूर्तावपि ग्रीष्मान्तेऽपि । विभावरीभिः [illegible] मेदसाम्भराः मांसलतातिशयः, स्थूलत्वमिति यावत् । बिभरांबभूविरे निशाभिर्भ[illegible] कर्मणि लिट् । "भीह्रीभृहुवां श्लुवच्च" इति बभ्रिरे । भृञः [illegible] जश्चर्यम् । शास्त्रविरोधादनुभवविरोधाच्चेति विकल्पादाम् प्रत्ययः । अहो आ[illegible] इत्यविरोधः । एतेनास्याः निरन्तर-भावः । विरहिणां तथा प्रतीयत इत्यविरोधः । एतेनास्याः निरन्तरचिन्ता जागरश्च गम्यते । अहोशब्दस्य "ओत्" इति प्रगृह्यत्वात् प्रकृतिभावः ॥ ४१ ॥

अथ नलस्यापि श्रवणानुरागमाह—**स्वकान्तीति** ॥ अथ नलोऽपि स्वस्य कान्त्या सौन्दर्येण याः कीर्तयः तासां व्रजः पुञ्ज एव मौक्तिकस्रक् मुक्ताहारः तस्य अन्तरभ्यन्तरे घटनागुणश्रियं गुम्फनसूत्रलक्ष्मीं श्रयन्तं भजन्तं युवधैर्यलोपिनं तरुणचित्तस्थैर्यहारिणं अस्याः दमयन्त्याः गुणोत्करं सौन्दर्यादिगुणसन्दोहं कदाचिल्लोकादागन्तुकजनादश्रृणोत् श्रुतवान् । अत्र कीर्तिव्रजगुणोत्करयोर्मुक्ताहारगुम्फनसूत्रत्वरूपणाद्रूपकालङ्कारः ॥

अथास्य तस्यां रागोदयं वर्णयति—**तमिति** ॥ ततः गुणश्रवणा

अकारि तेन श्रवणातिथिर्गुणः क्षमाभुजा भीमनृपात्मजाश्रयः।
तदुच्चधैर्यव्ययसंहितेषुणा स्मरेण च स्वात्मशरासनाश्रयः[1] ॥ ४४ ॥
अमुष्य धीरस्य जयाय साहसी शरासनज्यां[2] विशिखैः सनाथयन्।
निमज्जयामास यशांसि संशये स्मरस्त्रिलोकीविजयार्जितान्यपि ॥४५

नन्तरं शरीरशोभायाः देहसौन्दर्यस्य जयेन जातमत्सरः उत्पन्नवैरः, स्मरस्तमेवात्रसरमवकाशं लब्ध्वा। मूर्तया मूर्तिमत्या निजया आत्मीयया, अमोघशक्त्येव अकुण्ठसामर्थ्येनेवेत्युत्प्रेक्षा। तया दमयन्त्या नैषधं नलं विनिर्जेतुमियेष इच्छति स्म। रन्ध्रान्वेषिणो हि विद्वेषिण इति भावः। एतेन रागोद्गम उक्तः ॥ ४३ ॥

अकारीति ॥ तेन क्षमाभुजा नलेन भीमनृपात्मजाश्रयो दमयन्त्याश्रयः। तदीय इत्यर्थः। गुणः सौन्दर्यादिः श्रवणातिथिः श्रोत्रविषयोऽकारि कृतः। श्रुत इत्यर्थः। करोतेः कर्मणि लुङ्। तस्य नलस्य उच्चधैर्यव्ययायोद्धतधैर्यनाशाय। संहितेषुणा स्मरेण च स्वात्मनः स्वस्य शरासनाश्रयः चापनिष्ठो गुणो मौर्वी श्रवणातिथिरकारि। आकर्णं कृष्ट इत्यर्थः। दमयन्तीगुणश्रवणान्नलमनसि महान्मदनविकारः प्रादुर्भूत इत्यर्थः। अत्रोत्तरवाक्यार्थस्य पूर्ववाक्यार्थहेतुकत्वाद्वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः ॥ ४४ ॥

अमुष्येति ॥ स्मरः साहसी सन्। 'न साहसमनारुह्य नरो भद्राणि पश्यति' इति न्यायावलम्बी सन्नित्यर्थः। धीरस्य दुर्जयस्यामुष्य नलस्य, जयाय शरासनज्यां निजधनुर्मौर्वीं विशिखैः बाणैः सनाथयन्

१. 'नृपात्मजाश्रियः' 'नृपात्मजालयः' इति पाठान्तरं।

१. 'तदा खलु ज्याम्' इति पाठान्तरम्।

**अनेन भैमीं घटयिष्यतस्तथा विधेरवन्ध्येच्छतया व्यलासि तत् ।
अभेदि तत्तादृगनङ्गमार्गणैर्यदस्य पौष्पैरपि धैर्यकञ्चुकम् ॥ ४६ ॥**

---

सनाथं कुर्वन्, संयोजयन्नित्यर्थः । त्रयाणां लोकानां समाहारस्त्रिलोकी । "तद्धितार्थ-" इत्यादिना समासः । "अकारान्तोत्तरपदो द्विगुः स्त्रियामिष्टः" इति स्त्रीलिङ्गत्वात् द्विगोरिति ङीप् । तस्याः विजयेन आर्जितानि सम्पादितान्यपि यशांसि संशये निमज्जयामास । किं पुनः सम्प्रति सम्पाद्यमित्यपिशब्दार्थः । वृद्ध्यपेक्षया अनुचितकर्मारम्भे मूलमपि नश्येदिति सन्दिदेहेत्यर्थः । अत्र स्मरस्योक्तसंशयासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिः ॥ ४५ ॥

अथ दैवसहायात् पुष्पेषोरेव पुरुषकारः फलित इत्याह—**अनेनेति** ॥ अनेन नलेन सह भैमीं घटयिष्यतो विधेर्विधातुः । अवन्ध्येच्छतया अमोघसङ्कल्पत्वेन । तत् तस्मात् । तथा तेन प्रकारेण, योऽग्रे वक्ष्यत इति भावः । व्यलासि विलसितम् । लसतेर्भावे लुङ् । विधिसङ्कल्पः तथा विललासेत्यर्थः । यत् यस्मात्, तत्प्रसिद्धम् तादृक् तथा अभेद्यमित्यर्थः । अस्य नलस्य धैर्यमेव कञ्चुकं पौष्पैः पुष्पमयैरपि । तत्राप्यनङ्गस्याशरीरस्य मार्गणैरभेदि भिन्नम् । भिदेः कर्मणि लुङ् । दमयन्तीनलयोर्दाम्पत्यघटनायानङ्गबाणैर्नलधैर्यकञ्चुकभेदनाद्विधेरवन्ध्येच्छत्वं विज्ञायत इत्यर्थः । देवानुकूल्ये किं दुष्करमिति भावः । अत्रानङ्गेन पुष्पैः कञ्चुकं भिन्नमिति विरोधः । तस्य विधिविलासेनाभासीकरणाद्विरोधाभासोऽलङ्कारः । स च धैर्यकञ्चुकमिति रूपकोत्थापित इति तयोरङ्गाङ्गिभावेन सङ्करः ॥ ४६ ॥

किमन्यदद्यापि यदस्त्रतापितः पितामहो वारिजमाश्रयत्यहो ।
स्मरं तनुच्छायतया तमात्मनः शशाक शङ्के स न लङ्घितुं नलः ॥४७

उरोभुवा कुम्भयुगेन जृम्भितं नवोपहारेण वयःकृतेन किम् ।
त्रपासरिद्दुर्गमपि प्रतीर्य सा नलस्य तन्वी हृदयं विवेश यत् ॥४८॥

---

अथ विधिमपि जितवतः किं विध्यपेक्षयेत्याशयेनाह—**किमिति** ॥ किमन्यत् अन्यत्किमुच्यते । पितामहो विधिर्यस्य स्मरस्यास्त्रैस्तापितः । अद्यापि वारिजमाश्रयति । तस्य पद्मासनत्वादिति तत्त्वम् । शिशिरोपचारश्च गम्यते । अहो विधेरपि स्मरविधेयत्वमित्याश्चर्यम् । तं पितामहतापिनं स्मरम् । नलः आत्मनः तनोः छायेव छाया कान्तिर्यस्य तस्य भावस्तत्ता तया तनुच्छायतया । तनोः छाया अनातपः तनुच्छायम् । तत्तयेति च गम्यते । 'च्छाया त्वनातपे कान्तौ' इति वैजयन्ती । लङ्घितुं न शशाकेति शङ्के । न हि स्वच्छाया लङ्घितुं शक्येति भावः । अत्र स्मरलङ्घने पितामहोऽप्यशक्तः किमुत नल इत्यर्थापत्तिस्तावदेकोऽलङ्कारः । तनोः च्छायेव च्छायेत्युपमा । च्छाययोरभेदाध्यवसायादतिशयोक्तिः । एतत्-त्रितयोपजीवनेनालङ्घ्यत्वे तनुच्छायताया हेतुत्वोत्प्रेक्षणात् हेतूत्प्रेक्षा तत्सङ्कीर्णा । सा च शङ्क इति व्यञ्जकप्रयोगाद्वाच्येति ॥ ४७ ॥

**उरोभुवेति** ॥ सा तन्वी भैमी । त्रपैव सरित् सैव दुर्गं नल-सम्बन्धि तदपि प्रतीर्य नलस्य हृदयं विवेशेति यत् । तत्प्रवेशनं, यत्तदो-र्नित्यसम्बन्धात् । वयःकृतेन नवोपहारेण नूतननिर्माणेन । उरोभुवा तज्जन्येन तत्स्थानकेन च । कुम्भयुगेन कुचयुगलाख्येनेति भावः । अत एव विषयनिगरणेन अभेदाध्यवसायादतिशयोक्तिः । "न लोका-"

**अपह्नुवानस्य जनाय यन्निजामधीरतामस्य कृतं मनोभुवा ।**
**अबोधि तज्जागरदुःखसाक्षिणी निशा च शय्या च शशाङ्ककोमला ॥४९**

**स्मरोपतप्तोऽपि[1] भृशं न स प्रभुर्विदर्भराजं तनयामयाचत ।**
**त्यजन्त्यसून्शर्म च मानिनो वरं त्यजन्ति न त्वेकमयाचितव्रतम् ॥५०**

---

इत्यादिना कृद्योगे षष्ठीप्रतिषेधात् कर्तरि तृतीया । "नपुंसके भावेऽप्युपसङ्ख्यानम्" इति षष्ठी तु शेषविवक्षायाम् । जृम्भितं जृम्भणं किमित्युत्प्रेक्षा । सा चोक्तातिशयोक्तिमूलेति सङ्करः । दमयन्तीकुचकुम्भविभ्रमश्रवणान्नलस्त्रपां विहाय तस्यामासक्तचित्तोऽभूदित्यर्थः । एतेन मनस्सङ्ग उक्तः ॥ ४८ ॥

अथास्य जागरावस्थामाह—**अपह्नुवानस्येति** ॥ निजामधीरतां चपलत्वं जनायापह्नुवानस्य अपलपतः । "श्लाघह्नुङ्स्था-" इत्यादिना सम्प्रदानत्वात् चतुर्थी । अस्य नलस्य मनोभुवा कामेन । यज्जागरप्रलापादिकं कृतं तत्सर्वं जागरदुःखस्य । साक्षिणी साक्षाद्द्रष्ट्री । "साक्षाद्द्रष्टरि संज्ञायाम्" इति साक्षाच्छब्दादिनिप्रत्यये ङीप् । शशाङ्केन कोमला रम्या निशा चाबोधि बुद्धम् । "दीपजन-" इत्यादिना च्लेश्चिणादेशः । तथा शशाङ्कवत्कोमला मृदुला शय्या चाबोधि । निशायां शय्यायां जागरणात्तयोस्तत्साक्षित्वमिति भावः ॥ ४९ ॥

ननु किमनेन निर्बन्धेन याच्यतां भीमभूपतिर्दमयन्तीमित्याशङ्क्याह—**स्मरेति** ॥ प्रभुः समर्थः स नलो भृशमत्यन्तं स्मरोपतप्तोऽपि कामसन्तप्तोऽपि विदर्भराजं भीमभूपतिं तनयां नायाचत ।

१. 'स्मरेषुतप्तोऽपि' इति पाठान्तरम् ।

मृषाविषादाभिनयादयं क्वचिज्जुगोप निःश्वासततिं वियोगजाम् ।
विलेपनस्याधिकचन्द्रभागताविभावनाच्चापललाप पाण्डुताम् ॥५१॥

"दुह्याच्-" इत्यादिना द्विकर्मकत्वम् । तथा हि मानिनोऽभिमानवन्तः । असून् प्रणान् शर्म सुखं च त्यजन्ति । वरं मनाक्प्रियं एकमद्वितीयं अयाचितव्रतं अयाच्ञानियमं तु न त्यजन्ति । मानिनां प्राणत्यागदुःखाद्दुःसहं याच्ञादुःखमिति भावः । सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ॥ ५० ॥

**मृषेति** ॥ अयं नलः वियोगजां दमयन्तीविरहजां, निःश्वासततिं निःश्वासपरम्परां, क्वचित् कुत्रचित् वस्त्वन्तरे मृषाविषादाभिनयान्मिथ्याभूतदुःखप्रकटनाज्जुगोप संववार प्रियाविरहसन्तापसम्भूतं दीर्घनिःश्वासम् आरोपितमनःपीडाव्यक्तीकरणादाच्छादयामसेत्यर्थः । च किञ्च पाण्डुतां सन्ततकान्ताचिन्तासमुत्पन्नं वर्ष्मश्वैत्यं विलेपनस्य चन्दनस्य अधिको बहुलश्चन्द्रभागः कर्पूरांशो यस्मिन् सोऽधिकचन्द्रभागस्तस्य भावस्तत्ता । 'अथ कर्पूरमस्त्रियाम् । घनसारश्चन्द्रसंज्ञः' इत्यमरः । तस्याः विभावनादारोपणात् अपललाप निह्नुते स्म । शरीरवैवर्ण्यद्रष्टॄनपि चन्दने घनसाराधिक्यव्याजेन प्रतारयामासेत्यर्थः । कर्पूरस्यातिशैत्यात्तदाधिक्ये शरीररक्तं शुष्कीभवतीति प्रसिद्धिः । अत्र प्रत्यक्षसिद्धयोर्निःश्वासपाण्डुतयोरपह्नोतुमशक्यत्वात् उभयस्यापि विरहजन्यत्वमपलप्य तयोर्दुःखकर्पूराधिकत्वारोपादपह्नवप्रभेदः ॥ ५१ ॥

१. "अत्राङ्गगताभ्यां मृषाविषादचन्द्रभागपाण्डिमभ्यां तद्विरहश्वासपाण्डिम्नोः निगूहनान्मीलनालङ्कारः, 'मीलनं वस्तुना यत्र वस्त्वन्तरनिगूहनम्' इति लक्षणात्" इति क्वचित्पुस्तके पाठः ।

शशाक निह्नोतुमये न तत्प्रियामयं बभाषे यदलीकवीक्षिताम् ।
समाज एवालपितासु वैणिकैर्मुमूर्छ यत्पञ्चममूर्छनास्वपि[1] ॥ ५२ ॥

अवाप सापत्रपतां महीपतिर्जितेन्द्रियाणां धुरि कीर्तितस्थितिः ।
असंवरे शम्बरवैरिविक्रमे क्रमेण तत्र स्फुटतामुपेयुषि ॥ ५३ ॥

---

**शशाकेति** ॥ अयं नलः अलीकवीक्षितां भ्रान्तिदृष्टां प्रियां भैमीं बभाषे भाषितवानिति यत् । तथा समाजे सभायामेव, वीणा शिल्पमेषां तैः वैणिकैः वीणावादैः । 'वीणावादस्तु वैणिकः' इत्यमरः । "शिल्पम्" इति ठक् । आलपितासु उच्चारितासु, व्यक्तिं गतास्वित्यर्थः । 'रागव्यञ्जनमालापः' इति लक्षणम् । पञ्चमस्य पञ्चमाख्यस्वरस्य । मूर्छनासु आरोहणावरोहणेषु । 'क्रमात् स्वराणां सप्तानामारोहश्चावरोहणम् । मूर्छनेत्युच्युते' इति लक्षणात् । पञ्चमग्रहणं तस्य कोकिलालापकोमलत्वेनोद्दीपकत्वातिशयविवक्षयेत्यनुसन्धेयम् । मुमूर्छेत्यपि यत् तदुभयम् । निह्नोतुम् आच्छादयितुं न शशाक । अये इति विषादे, हन्तेत्यर्थः । 'अये क्रोधे विषादे च' इति विश्वः । एतेन ह्रीत्यागोन्माद-मूर्छावस्थाः सूचिताः ॥ ५२ ॥

**अवापेति** ॥ जितेन्द्रियाणां धुर्यग्रे कीर्तितस्थितिः ख्यातप्रतिष्ठः महीपतिर्नलः तत्र समाजे असंवरे संवरणरहिते, संवरीतुमशक्य इत्यर्थः । "गृहवृधृनिश्चिगमश्च" इत्यप्रत्ययः । शम्बरवैरिविक्रमे मन्मथविकारे क्रमेण स्फुटतामुपेयुषि प्रकाशतां गते सति, सापत्रपतां सत्रपत्वम् अवाप । धैर्यशालिनां तद्भङ्गस्त्रपाकर इति भावः ॥ ५३ ॥

---

१. 'मूर्च्छनासु च' इति पाठान्तरम् ।

**अलं नलं रोद्धुमिदं किलाभवन् गुणा विवेकप्रभवा[1] न चापलम् ।
स्मरः स्म रत्यामनिरुद्धमेव यत्सृजत्ययं सर्गनिसर्ग ईदृशः ॥ ५४ ॥
अनङ्गचिह्नं स विना शशाक नो यदासितुं संसदि यत्नवानपि ।
क्षणं तदारामविहारकैतवान्निषेवितुं देशमियेष निर्जनम् ॥ ५५ ॥**

---

ननु विवेकिनः कुत इदं चापलमित्यत आह—**अलमिति ॥** युक्तायुक्तविचारो विवेकः । तत्प्रभवाः गुणाः धैर्यादयः, नलम् । इदं स्त्रीलौल्यरूपम् । चापलं रोद्धुम् । "दुह्-याच्-" इत्यादिना रुधेर्द्विकर्मकत्वम् । अलं समर्थाः नाभवन् किल खलु । तथा हि—स्मरः कामः, जनमिति शेषः । रत्यां रागे, अनिरुद्धम् सृजति अनीश्वरमवशं करोति । रत्यां रतिदेव्याम् अनिरुद्धाख्यं कुमारं सृजतीति ध्वनिः । इति यत् अयं सर्गनिसर्गः सृष्टिप्रभावः ईदृशः स्म । 'रतिः स्मरप्रियायाञ्च रागेऽपि सुरतेऽपि च' 'अनिरुद्धः कामपुत्रे चारे चानीश्वरेऽपि च' इति विश्वः । अत्र स्मररागदुर्वारतायाः सर्वसृष्टिसाधारण्येन नलचापलदुर्वारतासमर्थनात्सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ॥ ५४ ॥

अथास्य मनोरथसिद्ध्यौपयिकं दिव्यहंससंवादनिदानभूतं वनविहारं प्रस्तौति—**अनङ्गेति** ॥ स नैषधो नलः, यत्नवानपि । अनङ्गचिह्नं मूर्छाप्रलापादिस्मरविकारं विना । संसदि क्षणमप्यासितुं यदा नो शशाक । तदा आरामविहारकैतवात् उपवनविहरणव्याजात् । निर्जनं देशं निषेवितुमियेष देशान्तरं गन्तुमैच्छदित्यर्थः । एतेन चापलाख्ये सञ्चारिणि भ्रमणलक्षणोऽनुभाव उक्तः ॥ ५५ ॥

---

१. 'विवेकप्रमुखा' इति पाठान्तरम् ।

**अथ श्रिया भर्त्सितमत्स्यकेतनः समं वयस्यैः स्वरहस्यवेदिभिः ।**
**पुरोपकण्ठोपवनं किलेक्षिता दिदेश यानाय निदेशकारिणः ॥ ५६ ॥**
**अमी ततस्तस्य विभूषितं सितं जवेऽपि मानेऽपि च पौरुषाधिकम् ।**
**उपाहरन्नश्वमजस्रचञ्चलैः खुराञ्चलैः क्षोदितमन्दुरोदरम् ॥ ५७ ॥**
**अथान्तरेणावटुगामिनाध्वना निशीथिनीनाथमहःसहोदरैः ।**
**निगालगाद्देवमणेरिवोत्थितैर्विराजितं केसरकेशरश्मिभिः ॥ ५८ ॥**

**अथेति** ॥ अथेच्छानन्तरं श्रिया सौन्दर्येण, भर्त्सितमत्स्यकेतनः तिरस्कृतस्मरः स नलः, स्वरहस्यवेदिभिः निजभैमीरागमर्मज्ञैः । वयसा तुल्याः वयस्याः स्निग्धाः । 'स्निग्धो वयस्यः सवयाः' इत्यमरः । तैः सम सह । पुरोपकण्ठोपवनं पुरसमीपारामम् । ईक्षिता द्रष्टा, तृन्नन्तमेतत् । अत एव 'न लोक-' इत्यादिना षष्ठीप्रतिषेधः । किलेत्यलीके । निदेशकारिणः आज्ञाकरान् । यानाय वाहनाय । यानमानेतुमित्यर्थः । "क्रियार्थ-" इत्यादिना चतुर्थी । दिदेश आज्ञापयामास ॥ ५६ ॥

**अमीति** ॥ ततः आज्ञापनानन्तरम् । अमी निदेशकारिणः । तस्य नलस्य । विभूषितम् अलङ्कृतम् । जवे वेगेऽपि । माने प्रमाणेऽपि च । पौरुषात् पुरुषगतिवेगात्, पुरुषप्रमाणाच्च अधिकम् । 'ऊर्ध्वविस्तृतदोःपाणिनृमाने पौरुषं त्रिषु' इत्यमरः । "पुरुषहस्तिभ्यामण् च" इत्यण् । अजस्रं चञ्चलैः चटुलस्वभावैः खुराञ्चलैः शफाग्रैः । क्षोदितमन्दुरोदरं चूर्णितस्वशालाभ्यन्तरम् । 'वाजिशाला तु मन्दुरा' इत्यमरः । एतच्चोत्तमाश्वलक्षणम् । सितं श्वेतम् अश्वम्, उपाहरन् आनिन्युरित्यर्थः ॥ ५७ ॥

अथ सप्तभिः कुलकमाह—**अथेति** ॥ अथ आनयनानन्तरं स नलः

अजस्रभूमीतटकुट्टनोद्गतैरुपास्यमानं चरणेषु रेणुभिः ।
रयप्रकर्षाध्ययनार्थमागतैर्जनस्य चेतोभिरिवाणिमाङ्कितैः ॥ ५९ ॥
चलाचलप्रोथतया महीभृते स्ववेगदर्पानिव वक्तुमुत्सुकम् ।
अलं गिरा वेद किलायमाशयं स्वयं हयस्येति च मौनमास्थितम् ॥

---

हयमारुरोहेत्युत्तरेणान्वयः । कथम्भूतम् । आन्तरेणाभ्यन्तरेण । अवटुगामिना कृकाटिकाख्यमस्तकपृष्ठभाजा । 'अवटुर्घाटा कृकाटिका' इत्यमरः । अध्वना मार्गेण, निगालगात् गलोद्देशगतात् । 'निगालस्तु गलोद्देशः' इत्यमरः । देवमणिरावर्तविशेषः । 'निगालजो देवमणिः' इति लक्षणात् । दिव्यमाणिक्यञ्च गम्यते । तस्मादुत्थितैरिवेत्युत्प्रेक्षा । निशीथिनीनाथमहःसहोदरैः चन्द्रांशुसदृशैरित्युपमा । केसरकेशा एव रश्मय इति रूपकम् । तैर्विराजितम् ॥ ५८ ॥

**अजस्रेति** ॥ अजस्रेण भूमीतटकुट्टनेन, उद्गतैरुत्थितैः रेणुभिः । रयप्रकर्षस्य वेगातिशयस्य । अध्ययनार्थमभ्यासाय । आगतैः अणिमाङ्कितैरणुत्वपरिमाणविशिष्टैः जनस्य लोकस्य चेतोभिरिवेत्युत्प्रेक्षा । चरणेषु पादेषु । उपास्यमानं सेव्यमानम् । अणुपरिमाणं मन इति तार्किकाः ॥ ५९ ॥

**चलाचलेति** ॥ पुनः चलाचलप्रोथतया स्वभावतः स्फुरमाणघोणतया । "चरिचलिपतिवदीनामुपसङ्ख्यानम्" इत्यनेन चलेर्द्विर्वचनं दीर्घश्च । 'घोणा तु प्रोथमस्त्रियाम्' इत्यमरः । महीभृते नलाय । स्ववेगदर्पान् वेगातिरेकान् वक्तुं उत्सुकमुद्युक्तमिवेत्युत्प्रेक्षा । अथाप्यवचने हेतुमुत्प्रेक्षते—**अलमिति** ॥ गिरा उक्त्या अलम् । कुतः । अयं नलः । स्वयम् । हयस्याश्वस्य । आशयमभिप्रायम् । वेद

**महारथस्याध्वनि चक्रवर्तिनः परानपेक्षोद्वहनाद्यशस्सितम्**
**रदावदातांशुमिषादनीदृशां हसन्तमन्तर्बलमर्वतां रवेः ॥ ६१ ॥**
**सितत्विषश्चञ्चलतामुपेयुषो मिषेण पुच्छस्य च केसरस्य च ।**

---

वेत्ति किल । "विदो लटो वा" इति णलादेशः । इति हेतोरिवेत्यनुषङ्गः । मौनं तूष्णीम्भावं च आस्थितं प्राप्तम् । अश्वहृदयवेदी नल इति प्रसिद्धिः ॥ ६० ॥

**महारथस्येति** ॥ महान् रथो यस्य तस्य महारथस्य । 'आत्मानं सारथिं चाश्वान् रक्षन्युध्येत यो नरः । स महारथसंज्ञः स्यादित्याहुर्नीतिकोविदाः ॥' इत्युक्तलक्षणस्य रथिकविशेषस्येत्यर्थः, अन्यत्र महतो रथस्य । चक्रं राष्ट्रं वर्तयतीति चक्रवर्ती सार्वभौमः । तस्य नलस्य । 'हरिश्चन्द्रो नलो राजा पुरुकुत्सः पुरूरवाः । सगरः कार्तवीर्यश्च षडेते चक्रवर्तिनः ॥' इत्यागमात् । अन्यत्र चक्रेणैकेन वर्तनशीलस्येत्यर्थः । अध्वनि मार्गे । नापेक्षत इत्यनपेक्षम् । "पचाद्यच्" । परेषामनपेक्षम् । तस्मादुद्वहनादसहायोद्वहनाद्धेतोः । यशःसितं कीर्तिविशदम् । अत एव अनीदृशाम् ईदृग्यशोरहितानाम् । "सप्त युञ्जन्ति रथमेकचक्रम्" इति सप्तानां सम्भूयोद्वहनश्रवणादिति भावः । रवेः अर्वतामश्वानाम् अन्तर्बलम् अन्तःसारम् । रदानां दन्तानां ये अवदाताः सिताः अंशवः तेषां मिषात् हसन्तं हसन्तमिव स्थितमित्यर्थः । अत्र मिषशब्देन अंशूनामसत्यत्वमापाद्य हासत्वोत्प्रेक्षणात्सापह्नवोत्प्रेक्षा । सा च गम्या व्यञ्जकाप्रयोगात् । 'रदना दशना दन्ता रदाः' इत्यमरः ॥ ६१ ॥

**सितत्विष इति** ॥ पुनः कथम्भूतं, सितत्विषः विशदप्रभस्य

स्फुटां[1] चलच्चामरयुग्मचिह्नकैरनिह्नुवानं निजवाजिराजताम् ॥ ६२ ॥
अपि द्विजिह्वाभ्यवहारपौरुषे मुखानुषक्तायतवल्गुवल्गया ।
उपेयिवांसं प्रतिमल्लतां रयस्मये जितस्य प्रसभं गरुत्मतः ॥ ६३ ॥
स सिन्धुजं शीतमहस्सहोदरं हरन्तमुच्चैःश्रवसः श्रियं हयम् ।
जिताखिलक्ष्माभृदनल्पलोचनस्तमारुरोह क्षितिपाकशासनः ॥ ६४ ॥

---

चञ्चलतामुपेयुषः, चञ्चलस्येत्यर्थः । पुच्छस्य लाङ्गूलस्य च केसरस्य सटासमूहस्य च मिषेण च्छलेन चलतश्चामरयुग्मस्य । चिह्नकैर्लक्षणैः स्फुटां प्रसिद्धां निजां वाजिराजताम् । अश्वेश्वरत्वम् अनिह्नुवानम्, प्रकाशयन्तमिवेत्यर्थः । अराज्ञः कथं चामरयुग्ममिति भावः । पूर्ववदलङ्कारः ॥ ६२ ॥

अपीति ॥ पुनः कथम्भूतं, रयस्मये वेगप्रयुक्ताहङ्कारे प्रसभं प्रसह्य जितस्य प्रागेव निर्जितस्य गरुत्मतः । मुखानुषक्ता वक्त्रलग्ना आयता दीर्घा वल्गू रम्या च या वल्गा मुखरज्जुः तया, तन्मिषेणेत्यर्थः । द्विजिह्वाभ्यवहारपौरुषे सर्पभक्षणपुरुषकारेऽपि, प्रतिमल्लतां प्रतिभटत्वम् । उपेयिवांसं प्राप्तमिवेत्यर्थः ! तथा च गम्योत्प्रेक्षेयम् । "उपेयिवाननाश्वाननूचानश्च" इति क्वसुप्रत्ययान्तो निपातः ॥ ६३ ॥

स इति ॥ जिताः अखिलाः क्ष्माभृतो भूपाः भूधराश्च येन सः । अनल्पलोचनो विशालाक्षः । अन्यत्र बहुनेत्रः, सहस्राक्ष इति यावत् । सः क्षितिपाकशासनः क्षितीन्द्रो नलः देवेन्द्रश्च । सिन्धुजं सिन्धुदेशोद्भवं, समुद्रोद्भवञ्च । 'देशे नदविशेषेऽब्धौ सिन्धुर्ना सरिति स्त्रियाम्'

---

१. 'स्फुट' इति क्वचित्पाठः ।

**निजा मयूखा इव तिग्मदीधितिं[1] स्फुटारविन्दाङ्कितपाणिपङ्कजम् ।**
**तमश्ववारा जवनाश्वयायिनं प्रकाशरूपा मनुजेशमन्वयुः ॥ ६५ ॥**
**चलन्नलङ्कृत्य महारयं हयं स वाहवाहोचितवेषपेशलः ।**
**प्रमोदनिष्पन्दतराक्षिपक्ष्मभिर्व्यलोकि लोकैर्नगरालयैर्नलः ॥ ६६ ॥**

---

इत्यमरः । शीतमहस्सहोदरम् चन्द्रसवर्णमित्यर्थः, अन्यत्र चन्द्रभ्रातरम् । एकयोनित्वादिति भावः । उच्चैःश्रवसः इन्द्राश्वस्य श्रियं हरन्तम् । तत्सरूपमित्यर्थः । तं हयम् आरुरोह । अत्रोच्चैःश्रवसः श्रियं हरन्तमित्युपमा । सा च श्लिष्टविशेषणात् श्लेषसङ्कीर्णा । क्षितिपाकशासन इत्यतिशयोक्तिः ॥ ६४ ॥

**निजा इति** ॥ निजा आत्मीयाः, प्रकाशरूपा उज्ज्वलाकाराः, भास्वररूपाश्च । अश्वान् वारयन्तीत्यश्ववारा अश्वारोहाः । स्फुटारविन्दाङ्कितपाणिपङ्कजम् पद्मरेखाङ्कितहस्तम् । अन्यत्र पद्महस्तम् । जवनो जवशीलः । "जुचङ्क्रम्य-" इत्यादिना युच् । तेनाश्वेन, अन्यत्र तैरश्वैर्यातीति तथोक्तम् । मनुजाः मनोर्जाता नराः तेषामीशं राजानं तं नलं तिग्मदीधितिं सूर्यम् । मयूखा इव अन्वयुः अन्वगच्छन् । यातेर्लङ् झेर्जुसादेशः ॥ ६५ ॥

**चलन्निति** ॥ वाहवाहोचितवेषपेशलः अश्ववाहोचितनेपथ्यचारुः । 'चारौ दक्षे च पेशलः' इत्यमरः । स नलः महारयं अतिजवनं हयं अलङ्कृत्य चलन् । स्वयं हयस्य भूषणीभूय गच्छन्नित्यर्थः । प्रमोदेन निष्पन्दतराणि अत्यन्तनिश्चलानि अक्षिपक्ष्माणि येषां

---

१. 'तीक्ष्णदीधितिं' इति पाठान्तरम् ।

क्षणादथैष क्षणदापतिप्रभः प्रभञ्जनाध्येयजवेन वाजिना ।
सहैव ताभिर्जनदृष्टिवृष्टिभिर्बहिः पुरोऽभूत् पुरुहूतपौरुषः ॥ ६७ ॥

ततः प्रतीच्छ प्रहरेति भाषिणी परस्परोल्लासितशल्यपल्लवे ।
मृषामृधं सादिबले कुतूहलान्नलस्य नासीरगते वितेनतुः ॥ ६८ ॥

---

तैरनिमेषदृष्टिभिरित्यर्थः । नगरालयैर्नगरनिवासिभिः, लोकैर्जनैर्व्यलोकि, विस्मयहर्षाभ्यां विलोकित इत्यर्थः । वृत्त्यनुप्रासोऽलङ्कारः ॥ ६६ ॥

**क्षणादिति** ॥ अथ अनन्तरं क्षणदापतिप्रभः चन्द्रद्युतिः, पुरुहूतपौरुषः इन्द्रस्येव पौरुषं कर्म तेजो वा यस्य तादृश एष नलः । प्रभञ्जनाध्येयजवेन प्रभञ्जनेन वायुना अध्येयः शिक्षणीयः जवो वेगो यस्य तेन, ततोऽप्यधिकवेगेनेत्यर्थः । वाजिना अश्वेन, क्षणात् ताभिः पूर्वोक्ताभिः जनदृष्टिवृष्टिभिः जनानां दृष्टिपातैः सह । जनैर्दृश्यमान एवेत्यर्थः । बहिः पुरः पुराद्बहिः, बहिःस्थितोऽभूत् । बहिर्योगे पञ्चमी । पूर्वं पुरे दृष्टः क्षणान्तर एव पुराद्बहिर्दृष्ट इति वेगातिशयोक्तिः ॥ ६७ ॥

**तत इति** ॥ ततः पुराद्बहिर्गमनानन्तरं प्रतीच्छ गृहाण प्रहर जहीति भाषिणी भाषमाण इत्यर्थः । परस्परमन्योन्योपरि, उल्लासितानि प्रसारितानि, शल्यपल्लवानि तोमराग्राणि याभ्यां ते तथोक्ते । 'शल्यं तु तोमरः' इत्यमरः । नलस्य नासीरगते सेनाप्रवर्तिनी । 'सेनामुखं तु नासीरम्' इत्यमरः । सादिबले तौरङ्गिकसैन्ये । कुतूहलान्मृषामृधं मिथ्यायुद्धम्, युद्धनाटकमित्यर्थः । वितेनतुः चक्रतुः । 'मृधमायोधनं सङ्ख्यम्' इत्यमरः ॥ ६८ ॥

प्रयातुमस्माकमियं कियत्पदं धरा तदम्भोधिरपि स्थलायताम् ।
इतीव वाहैर्निजवेगदर्पितैः पयोधिरोधक्षममुत्थितं[1] रजः ॥ ६९ ॥
हरेर्यदक्रामि[2] पदैककेन खं पदैश्चतुर्भिः क्रमणेऽपि तस्य नः ।
त्रपा हरीणामिति नम्रिताननैर्न्यवर्ति तैरर्धनभःकृतक्रमैः ॥ ७० ॥

---

**प्रयातुमिति** ॥ इयं धरा भूः समुद्रातिरिक्तेति भावः । अस्माकं प्रयातुं प्रस्थातुम् । कियत्पदं गन्तव्यस्थानं, न किञ्चित्पर्याप्तमित्यर्थः । तत् तस्मात् अम्भोधिरपि स्थलायतां स्थलवदाचरतु, भूरेव भवत्वित्यर्थः । "कर्तुः क्यङ् सलोपश्च" इति क्यङ्प्रत्ययः । इतीव इति मत्वेव । इतिनैव गम्यमानार्थत्वादप्रयोगः । अन्यथा पौनरुक्त्यात् । क्रियानिमित्तोत्प्रेक्षा । निजवेगेन दर्पितैः सञ्जातदर्पैः, वाहैर्नलाश्वैः । पयोधिरोधक्षमं समुद्रच्छादनपर्याप्तम् । रज उत्थितं उत्थापितम् । तथा सान्द्रमिति भावः ॥ ६९ ॥

**हरेरिति** ॥ यत् खं आकाशम् । हरेरेककेन एकाकिना । "एकादाकिनिच्चासहाये" इति चकारात् कन्प्रत्ययः । पदा पादेन । 'पदङ्घ्रिश्चरणोऽस्त्रियाम्' इत्यमरः । "पद्दन्-" इत्यादिना पदादेशः । अक्रामि अलङ्घि । तस्य खस्य । चतुर्भिः पादैः क्रमणे लङ्घने, कृते

---

१. 'उद्धतं' इति पाठान्तरम् ।

२. ननु 'नोदात्तोपदेशस्य मान्तस्यानाचमेः' इति वृद्धिनिषेधात् 'अक्रमि' इत्येव न्याय्यमिति चेदत्र दीक्षिताः—"कथं तर्हि 'हरेर्यदक्रामि' इति श्रीहर्षः? प्रमाद एवायम् । यदि समाधेयमेवेत्याग्रहः तर्हि निवृत्तप्रेषणात् प्राकृतेऽर्थे णिचि ततश्चिण् बोध्यः" इत्याहुः । तथा सत्यत्र णिज्निमित्तिका वृद्धिर्भविष्यतीति तेषामाशयः ।

चमूचरास्तस्य नृपस्य सादिनो जिनोक्तिषु श्राद्धतयेव सैन्धवाः ।
विहारदेशं तमवाप्य मण्डलीमकारयन् भूरि तुरङ्गमानपि ॥ ७१ ॥

---

सत्यपीति शेषः । हरीणां वाजिनां विष्णूनां चेति गम्यते । 'यमानिलेन्द्रचन्द्रार्कविष्णुसिंहांशुवाजिषु । शुकाहिकपिभेकेषु हरिर्ना कपिले त्रिषु ॥' इत्यमरः । नोऽस्माकं त्रपा इतीवेत्यर्थः । गम्यार्थत्वादिवशब्दस्याप्रयोगः । अत एव गम्योत्प्रेक्षा । नम्रितानि नम्रीकृतानि आननानि यैस्तैः हरिभिः । अर्धे नभसि कृतक्रमैः कृतलङ्घनैः सद्भिः । न्यवर्ति निवर्तितम् । भावे लुङ् । यदन्येन पुंसा लघूपायेन साधितं तस्य गुरूपायेन करणं समानस्य लाघवाय भवेदिति भावः । एतेन प्लुतगतिरुक्ता, तत्र गगनलङ्घनस्य सम्भवादिति ॥ ७० ॥

**चमूचरा इति** ॥ तस्य नृपस्य, चमूचराः सेनाचराः । "चरेष्टच्" । सिन्धुदेशभवाः सैन्धवाः, अश्वाः । 'हयसैन्धवसप्तयः' इत्यमरः । "तत्र भवः" इत्यण् । तत्सम्बन्धिनोऽपि सैन्धवाः "तस्येदं" इत्यण् । ते सादिनोऽश्वसादिन इत्यर्थः । जिनोक्तिषु श्राद्धतयेव । जैनदर्शनश्रद्धालुतयेवेत्युत्प्रेक्षा । "प्रज्ञाश्रद्धार्चावृत्तिभ्यो णः" इति मत्वर्थीयो णप्रत्ययः । तं विहारदेशं सञ्चारभूमिं, सुगतालयञ्च । 'विहारो भ्रमणे स्कन्धे लीलायां सुगतालये' इति विश्वः । अवाप्य तुरङ्गमान् भूरि बहुलं मण्डलीमपि, मण्डलाकारञ्च । अकारयन् । अपिशब्दोऽवाप्तिसमुच्चयार्थः । अन्यत्र मण्डलीं मण्डलासनमित्यर्थः । बौद्धाः स्वकर्मानुष्ठाने प्रायेण मण्डलासनं कुर्वन्तीति प्रसिद्धिः ॥ ७१ ॥

**द्विषद्भिरेवास्य विलङ्घिता दिशो यशोभिरेवाब्धिरकारि गोष्पदम् ।**
**इतीव धारामवधीर्य मण्डलीक्रियाश्रियामण्डि तुरङ्गमैः स्थली ॥७२॥**
**अचीकरच्चारु हयेन या भ्रमीर्निजातपत्रस्य तलस्थले नलः ।**
**मरुत् किमद्यापि न तासु शिक्षते वितत्य वात्यामयचक्रचङ्क्रमान् ॥**

---

**द्विषद्भिरिति** ॥ अस्य नलस्य द्विषद्भिरेव, पलायमानैरिति भावः । दिशो लङ्घिताः अस्य यशोभिरेवाब्धिः । गोः पदं गोष्पदमकारि गोष्पद-मात्रः कृतः । "गोष्पदं सेवितासेवितप्रमाणेषु" इति सुडागमषत्वयोर्निपातः । इतीव इति मत्वेवेत्युत्प्रेक्षा । अन्यसाधारणं कर्म नोत्कर्षाय भवेदिति भावः । तुरङ्गमैर्धारां गतिम् । जातावेकवचनम् । पञ्चापि धारा इत्यर्थः । 'आस्कन्दितं धौरितकं रेचितं वल्गितं प्लुतम् । गतयोऽमूः पञ्चधाराः' इत्यमरः । अवधीर्यानादृत्य । मण्डलीक्रियाश्रिया मण्डलीकरणलक्ष्म्या, मण्डलगत्यैवेत्यर्थः । स्थली कृत्रिमभूमिः । 'जानपद-' इत्यादिना कृत्रि-मार्थे ङीष् । अमण्डि अभूषि । मडि भूषणे इति धातोर्ण्यन्तात्कर्मणि लुङ् । इदित्वान्नुमागमः ॥ ७२ ॥

**अचीकरदिति** ॥ नलः चारु यथा तथा । हयेन प्रयोज्यकर्त्रा निजातपत्रस्य तलस्थले अधःप्रदेशे । 'अधः स्वरूपयोरस्त्री तलम्' इत्यमरः । याः भ्रमीः मण्डलगतीः । अचीकरत् कारितवान् । करो-तेर्णौ चङ् । तासु भ्रमिषु विषये मरुदद्यापि वातानां समूहाः वात्याः । "पाशादिभ्यो यः" । अत्र तद्भ्रमयो लक्ष्यन्ते । तन्मयान् तद्रूपान् । चक्रचङ्क्रमान् मण्डलगतीः । वितत्य विस्तीर्य । न शिक्षते किं नाभ्य-स्यते किमित्युत्प्रेक्षा । शिक्षितश्चेत् तथा सोऽपि गतिं कुर्यादिति भावः ।

**विवेश गत्वा स विलासकाननं ततः क्षणात् क्षोणिपतिर्धृतीच्छया ।**
**प्रवालरागच्छुरितं सुषुप्सया हरिर्घनच्छायमिवाम्भसां निधिम् ॥७४॥**

**वनान्तपर्यन्तमुपेत्य सस्पृहं क्रमेण तस्मिन्नवतीर्णदृक्पथे ।**
**न्यवर्ति दृष्टिप्रकरैः पुरौकसामनुव्रजद्बन्धुसमाजबन्धुभिः ॥ ७५ ॥**

---

वायोरप्यसम्भाविता गतीरचीकरदिति भावः ॥ ७३ ॥

**विवेशेति** ॥ ततः सः क्षोणिपतिः क्षणात् गत्वा धृतीच्छया सन्तोषकाङ्क्षया । प्रवालाः पल्लवाः, अन्यत्र विद्रुमाः । 'प्रवालो वल्लकी-दण्डे विद्रुमे नवपल्लवे' इत्यमरः । तेषां रागेणारुण्येन । छुरितं रूषितम् । घनच्छायं सान्द्रानातपम्, अन्यत्र मेघकान्तिम् । 'छाया त्वनातपे कान्तौ' इति विश्वः । विलासकाननं क्रीडावनम्, अन्यत्र वबयोरभेदात्, बिलासकानां बिलेशयानां सर्पाणाम् । अननं प्राणनम् । सुषुप्सया स्वप्तुमिच्छया, हरिर्विष्णुः । अम्भसां निधिमब्धिमिव विवेश ॥ ७४ ॥

**वनान्तेति** ॥ अनुव्रजद्बन्धुसमाजबन्धुभिः स्नेहादनुगच्छद्बन्धु-सङ्घसदृशैरित्यर्थः । अत एवोपमालङ्कारः । पुरौकसां दृष्टिप्रकरैः दृष्टिसमूहैः कर्तृभिः । वनान्तपर्यन्तं काननोपान्तसीमाम् । उदकप्रान्तपर्यन्तञ्चेति गम्यते । 'वने सलिलकानने' इत्यमरः । सस्पृहं साभिलाषं यथा तथा उपेत्य गत्वा । क्रमेण तस्मिन् नले अवतीर्णदृक्पथे अतिक्रान्तदृष्टिविषये सति । न्यवर्ति निवृत्तम् । भावे लुङ् । यथा बन्धुभिः 'ओदकात् प्रियं पान्थ-मनुव्रजेत्' इत्यागमात् प्रवसन्तमनुव्रज्य निवर्त्यते तद्वदित्यर्थः ॥ ७५ ॥

**त्वदग्रसूचीसचिवः स कामिनोर्मनोभवः सीव्यति दुर्यशःपटौ ।**
**स्फुटञ्च पत्रैः करपत्रमूर्तिभिर्वियोगिहृद्दारुणि दारणायते ॥ ८० ॥**
**धनुर्मधुस्विन्नकरोऽतिभीमजापरं परागैस्तव धूलिहस्तयन् ।**
**प्रसूनधन्वा शरसात्करोति मामिति क्रुधाक्रुश्यत तेन केतकम् ॥८१॥**

---

कठोरकेतकस्य कर्णिशरस्वरूपणाद्रूपकालङ्कारः । ततः कर्णिशरत्वादेव दुराकर्षतया तदन्तकृत्तेषां वियोगिनां मारकं सत् । मन्मथदेहदाहिना स्मरहरेण, विगीयसे विगर्ह्यसे । द्वेष्यवद्द्वेष्योपकरणमपि असह्यमेव । तदपि हिंस्रश्चेत्किमु वक्तव्यमिति भावः । अत्रेश्वरकर्तृकस्य केतकीविगानस्य तद्गतवियोगिहिंस्रताहेतुकत्वोत्प्रेक्षणाद्धेतूत्प्रेक्षा, व्यञ्जकाप्रयोगाद्गम्या । सा चोक्तरूपकोत्थापितेति सङ्करः ॥ ७९ ॥

**त्वदग्रसूचीति ॥** तव अग्राण्येव सूच्यः सचिवाः सहकारिणो यस्य स तथोक्तः, सः प्रसिद्धः मनोभवः । कामिनी च कामी च कामिनौ तयोः । "पुमान् स्त्रिया" इत्येकशेषः । दुर्यशसी । अकीर्ति त्यपकीर्ती एव पटाविति रूपकम् । सीव्यति कण्टकस्यूतं करोतीत्यर्थः । किं चेति चार्थः । करपत्रमूर्तिभिः क्रकचाकारैः । 'क्रकचोऽस्त्री करपत्रम्' इत्यमरः । पत्रैः । वियोगिनां, हृद्येव दारुणि । दारयतीति दारणः विदारकः छेत्ता । स इवाचरतीति दारणायते । "कर्तुः क्यङ् सलोपश्च" इति क्यङन्ताल्लट् । दारणायत इत्युपमा । सा च हृद्दारुणीति रूपकानुप्राणितेति सङ्करः ॥ ८० ॥

**धनुरिति ॥** हे केतक, प्रसूनं धनुर्यस्येति प्रसूनधन्वा पुष्पचापः । "वा संज्ञायाम्" इत्यनङादेशः । अत एव धनुषः मधुना

**विदर्भसुभ्रूस्तनतुङ्गताप्तये घटानिवापश्यदलं तपस्यतः ।**
**फलानि धूमस्य धयानधोमुखान् स दाडिमे दोहदधूपिनि द्रुमे ॥**

---

मकरन्देन, स्विन्नकरः आर्द्रपाणिः सन् । अत एव तव परागैः रजोभिः, धूलिहस्तयन् पुनःपुनः धूल्युद्वापितहस्तमात्मानं कुर्वन् । अन्यथा धनुःस्रंसनादिति भावः । "तत्करोति" इति ण्यन्ताल्लटश्शत्रादेशः । अतिभीमजापरं अत्यन्तदमयन्त्यासक्तं मां शरसाच्छराधीनं करोति । "तदधीनवचने" इति सातिप्रत्ययः । अन्यथा स्रस्तचापः सन् मां किं कुर्यादिति भावः । इतीत्थं श्लोकत्रयोक्तरीत्या तेन राज्ञा क्रुधा केतकम्, आक्रुश्यत अपराधोद्घाटनेन अघोष्यतेत्यर्थः ॥ ८१ ॥

विदर्भेति ॥ स नलः । 'तरुगुल्मलतादीनामकाले कुशलैः कृतम् । पुष्पाद्युत्पादकं द्रव्यं दोहदं स्यात्तु तत्क्रिया ॥' इति शब्दार्णवे । दोहदं चासौ धूपश्च । तदुक्तम् 'मेषामिषाम्बुससेकस्तत्केशामिषधूपनम् । स्थेयानयं प्रयोगा हि दाडिमीफलवृद्धये ॥ मत्स्याज्यत्रिफलालेपैर्मांसैराजाविकोद्भवैः । लेपिता धूपिता सूते फलं तालीव दाडिमी ॥ आविकाथेन संसिक्ता धूपिता तस्य लोमभिः । फलानि दाडिमी सूते सुबहूनि पृथूनि च ॥' इति । तद्वति दाडिमद्रुमे फलानि विदर्भसुभ्रुवो दमयन्त्याः स्तनयोर्या तुङ्गता । तदाप्तये तत्प्राप्तये । तादृगौन्नत्यलाभायेत्यर्थः । अलमत्यन्तं तपस्यतः तपश्चरतः । "कर्मणो रोमन्थतपोभ्यां वर्तिचरोः" इति क्यङ्प्रत्यये, "तपसः परस्मैपदञ्च" इति परस्मैपदम् । धूमस्य दोहदधूमस्य धयन्तीति धयान् पातॄन् । अत्र "आतश्चोपसर्गे" इति उपसर्गग्रहणाननुवृत्तेः पाक्षिकत्वात् "पा-घ्रा-" इत्यादिना अनुप-

वियोगिनीमैक्षत दाडिमीमसौ प्रियस्मृतेः स्पष्टमुदीतकण्टकाम् ।
फलस्तनस्थानविदीर्णरागिहृद्विशच्छुकास्यस्मरकिंशुकाशुगाम् ॥८३॥
स्मरार्धचन्द्रेषुनिभे क्रशीयसां स्फुटं पलाशेऽध्वजुषां पलाशनात् ।
स वृन्तमालोकत खण्डमन्वितं वियोगिहृत्खण्डिनि कालखण्डजम् ॥

---

सृष्टादपि घेटश्शप्रत्यय इति गतिः । अत एवोक्तं काशिकायां 'केचिदुपसर्ग इति नानुवर्तयन्ति' इति । अधोमुखान् घटानिव । अपश्यदित्युत्प्रेक्षा । फलार्थिन उग्रं तपस्यन्तीति भावः ॥ ८२ ॥

वियोगिनीमिति ॥ असौ नलः, प्रियस्मृतेः दयितस्मरणात्, स्पष्टं व्यक्तम् । उदीतेति इण् गतौ इति धातोः कर्तरि क्तः । उदीरिताः उद्गताः कण्टकाः स्वावयवसूचय एव कण्टका रोमाञ्चाः यस्यास्तामिति श्लिष्टरूपकम् । 'वेणौ द्रुमाङ्गे रोमाञ्चे क्षुद्रशत्रौ च कण्टकः' इति वैजयन्ती । फलान्येव स्तनौ, तावेव स्थानम् । तत्र विदीर्णः रागोऽस्यास्तीति रागि, रक्तवर्णमनुरक्तञ्च । यत्तस्मिन् हृदि, विशद्बीजभक्षणायान्तः प्रविशत् शुकास्यं शुकतुण्डमेव । स्मरस्य, किंशुकं पलाशकुड्मलमेव आशुगो बाणो यस्यास्ताम् दाडिमीमेवं वियोगिनीं विरहिणीं, ऐक्षत अपश्यत् । रूपकालङ्कारः । विः पक्षी, तद्योगिनीमिति च गम्यते ॥ ८३ ॥

स्मरेति ॥ स नलः स्मरस्य योऽर्धचन्द्रः अर्धचन्द्राकारः, इषुः तन्निभे, तत्सदृशे नित्यसमासत्वादस्वपदविग्रहः । अत एवाह अमरः 'स्युरुत्तरपदे त्वमी—निभसङ्काशनीकाशप्रतीकाशोपमादयः' इति । वियोगिनां हृत्खण्डिनि हृदयभेदिनि । क्रशीयसां कृशतराणाम् । अध्वजुषामध्व-

नवा लता गन्धवहेन चुम्बिता करम्बिताङ्गी मकरन्दशीकरैः ।
दृशा नृपेण स्मितशोभिकुड्मला दरादराभ्यां दरकम्पिनी पपे ॥८५॥

विचिन्वतीः पान्थपतङ्गहिंसनैरपुण्यकर्माण्यलिकज्जलच्छलात् ।
व्यलोकयच्चम्पककोरकावलीः स शम्बरारेर्बलिदीपिका इव ॥ ८६ ॥

गामिनाम् । पलाशनान्मांसभक्षणाद्धेतोः पलाशे पलमश्नातीति व्युत्पत्त्या पलाशसंज्ञाभाजि किंशुककलिकायामित्यर्थः । अन्वितं सम्बद्धं स्फुटम् । वृन्तं प्रसवबन्धनम् । तदेव कालखण्डजं खण्डं यकृत्खण्डमिति व्यस्तरूपकम् । आलोकत अलोकितवान् । 'कालखण्डं यकृत्समे' इत्यमरः । तच्च दक्षिणपार्श्वस्थकृष्णवर्णो मांसपिण्डविशेषः ॥ ८४ ॥

नवेति ॥ गन्धवहेन वायुना, चुम्बिता स्पृष्टा । अन्यत्र अनुलिप्तेन पुंसा वीक्षिता । मकरन्दशीकरैः पुष्परसकणैः, करम्बिताङ्गी व्यामिश्रितरूपा । अन्यत्र स्विन्नाङ्गीति च गम्यते । स्मितशोभिनः विकासरम्याः, कुड्मला मुकुलाः यस्याः सा मन्दहासमनोहरदन्तमुकुला च गम्यते । दरकम्पिनी वायुस्पर्शादीषत्कम्पा सात्त्विकवेपथुमती च । नव लता वल्ली, तत्सदृशी कान्ता च गम्यते । नृपेण कर्त्रा । दृशा करणेन दरादराभ्यां भयतृष्णाभ्यां उपलक्षितेन सता । पपे पीता, गाढं दृष्टेत्यर्थः । उद्दीपकत्वाद्दरः, प्रियासादृश्यादादरश्च । 'दरोऽस्त्री शङ्कभीगर्तेष्वल्पार्थे त्वव्ययम्' इति वैजयन्ती । अत्र प्रस्तुतविशेषणसाम्यादप्रस्तुत नायिकाप्रतीतेः समासोक्तिरलङ्कारः । "विशेषणानां तौल्येन यत्र प्रस्तुत वर्णनात् । अप्रस्तुतस्य गम्यत्वं सा समासोक्तिरिष्यते ॥" इति लक्षणात् ।

विचिन्वतीरिति ॥ पन्थानं गच्छन्ति नित्यमिति पान्थाः

**अमन्यतासौ कुसुमेषुगर्भजं परागमन्धङ्करणं वियोगिनाम् ।**
**स्मरेण मुक्तेषु पुरा पुरारये तदङ्गभस्मेव शरेषु सङ्गतम् ॥ ८७ ॥**
**पिकाद्वने शृण्वति भृङ्गहुङ्कृतैर्दशामुदञ्चत्करुणं वियोगिनाम् ।**
**अनास्थया सूनकरप्रसारिणीं ददर्श दूनः स्थलपद्मिनीं नलः ॥ ८८ ॥**

---

नित्यपथिकाः । "पन्थो ण नित्यम्" इति णप्रत्ययः पन्थादेशश्च । त एव पतङ्गाः पक्षिणः । 'पतङ्गः पक्षिसूर्ययोः' इत्यमरः । तेषाम्, हिंसनैर्वधैः, अपुण्यकर्माणि । अलयः कज्जलानीवेत्युपमितसमासः । तेषां छलादित्यपह्नवालङ्कारः । विचिन्वतीः सङ्गृह्णतीः हिंसापापकारिणीरित्यर्थः । चम्पककोरकावलीः । शम्बरारेः स्मरस्य । बलिदीपिकाः पूजादीपिका इवेत्युत्प्रेक्षा । स नलो व्यलोकयत् ॥ ८६ ॥

**अमन्यतेति** ॥ असौ नलः कुसुमान्येव इषवः कामबाणाः, तेषां गर्भजं गर्भजातम् । वियोगिनामिति कर्मणि षष्ठी । अनन्धाः अन्धाः क्रियन्ते अनेनेत्यन्धङ्करणम् । "अढ्यसुभग-" इत्यादिना च्व्यर्थे ख्युन्प्रत्ययः । "अरुर्द्विषत्" इत्यादिना मुमागमः । तं परागम्, पुरा पूर्वं, पुरारये पुरहराय । स्मरेण मुक्तेषु शरेषु । सङ्गतं संसक्तं तस्य पुरारेरङ्गे यद्भस्म तदिवामन्यतेत्युत्प्रेक्षितवानित्यर्थः । पुरा पुरारये ये मुक्तास्त एवैते पुरोवर्तिनः, कुसुमेषव इत्यभिमानः । अन्यथा एषां तदङ्गभस्मसङ्गोत्प्रेक्षानुत्थानादिति ॥ ८७ ॥

**पिकादिति** ॥ वने श्रोतरि, पिकाद्वक्तुः सकाशात् । भृङ्गहुङ्कृतैः । वियोगिनां दशां अलिहुङ्कारकृतां दुरवस्थामित्यर्थः । उदञ्चत्करुणं विकसद्वृक्षविशेषम् उद्यत्कृपञ्च यथा तथा शृण्वति सति । 'करुणस्तु रसे वृक्षे कृपायां करुणा मता' इति विश्वः । अनास्थया श्रोतुमनिच्छया

रसालसालः समदृश्यतामुना स्फुरद्द्विरेफारवरोषहुङ्कृतिः ।
समीरलोलैर्मुकुलैर्वियोगिने जनाय दित्सन्निव तर्जनाभयम् ॥ ८९ ॥
दिने दिने त्वं तनुरेधि रेऽधिकं पुनःपुनर्मूर्छ च मृत्युमृच्छ च ।
इतीव पान्थं शपतः पिकान् द्विजान् सखेदमैक्षिष्ट स लोहितेक्षणान् ॥

---

सूनं प्रसूनमेव करं प्रसारयतीति तथोक्ताम् । अनिष्टकथां करेण वारयन्तीमिव स्थितामित्यर्थः । सूनकरेति रूपकानुप्राणिता गम्योत्प्रेक्षेयम् । स्थलपद्मिनीम् । नलः, दूनः परितप्तः सन् । दूङः कर्तरि क्तः । "ल्वादिभ्य"[1] इति निष्ठानत्वम् । ददर्श ॥ ८८ ॥

रसालेदि ॥ अमुना नलेन स्फुरद्द्विरेफारवः भ्रमरझङ्कार एव रोषेण हुङ्कृतिर्हुङ्कारः सा यस्य सः । समीरलोलैर्वायुचलैः मुकुलैरङ्गुलिभिरिवेति भावः । वियोगिने जनाय । तर्जनाभयम् । दित्सन् दातुमिच्छन्निव स्थितः । ददातेः सन्प्रत्ययः । "सनि मीमा-" इत्यादिना इसादेशः । "अत्र लोपोऽभ्यासस्य" इत्यभ्यासलोपः । "सस्यार्धधातुके" इति सकारस्य तकारः । रसालसालः चूतवृक्षः, समदृश्यत सम्यग्दृष्टः । द्विरेफेत्यादिरूपकोत्थापितेयं तर्जनाभयजननोत्प्रेक्षेति सङ्करः ॥ ८९ ॥

दिने दिन इति ॥ रे इति हीनसम्बोधने । रे, त्वं दिने दिने । अधिकं तनुरेधि कृशो भव । अस्तेर्लोटि सिप् । "हुझल्भ्यो हेर्धिः" इति धित्वम्, "घ्वसोरेद्धावभ्यासलोपश्च" इत्येत्वम्,

१. दूङो ल्वादित्वाभावादयं प्रमाद एव । वस्तुतस्तु 'षूङ् प्राणिप्रसवे' इत्यादीनां नवानां धातूनां ओदित्वातिदेशात् 'ओदितश्च' इत्यनेन निष्ठानत्वमिति बोध्यम् ।

**अलिस्रजा कुड्मलमुच्चशेखरं निपीय चाम्पेयमधीरया दृशा ।**
**स धूमकेतुं विपदे वियोगिनामुदीतमाशङ्कितवानशङ्कत ॥ ९१ ॥**
**गलत्परागं भ्रमिभङ्गिभिः पतत् प्रसक्तभृङ्गावलि नागकेसरम् ।**
**स मारनाराचनिघर्षणस्खलज्ज्वलत्कणं शाणमिव व्यलोकयत् ॥९२**

“श्वसोरल्लोपः” इत्यकारलोपः । पुनःपुनर्मूर्छ्छ च । मृत्युं मरणम् । ऋच्छ चेति । पान्थं नित्यपथिकम्, शपतः शपमानानिव स्थितानित्युत्प्रेक्षा । लोहितेक्षणान् रक्तदृष्टीन् । एकत्र स्वभावतः, अन्यत्र रोषाच्चेति द्रष्टव्यम् । पिकान् द्विजान् कोकिलान् पक्षिणो ब्राह्मणांश्च, स नलः, सखेदं ऐक्षिष्ट । स्वस्याप्युक्तशङ्कयेति भावः ॥ ९० ॥

**अलिस्रजेति** ॥ अलिस्रजा भ्रमरपङ्क्त्या, उच्चशेखरं उन्नतशिरोभूषणं, अलिमलिनाङ्गमित्यर्थः । ‘शिखास्वापीडशेखरौ’ इत्यमरः । चाम्पेयं चम्पकविकारं कुड्मलम् । ‘अथ चाम्पेयश्चम्पको हेमपुष्पकः’ इत्यमरः । नन्वयुक्तमिदम् । ‘न षट्पदो गन्धफलीमजिघ्रत्’ इत्यादौ अलीनां चम्पकस्पर्शाभावप्रसिद्धेरिति चेन्न, स्पृशन्त्येव । किं तु स्पृष्टा म्रियन्ते तावतैव स्पर्शाभावप्रसिद्धिरिति क्वचित्कीर्तितः परिहारः । अथ वा चाम्पेयं नागकेसरम् । ‘चाम्पेयः केसरो नागकेसरः काञ्चनाह्वयः’ इत्यमरः । अधीरया दृशा निपीय, विक्लवदृष्ट्या गाढं दृष्ट्वा आशङ्कितवान् किञ्चिदनिष्टमुत्प्रेक्षितवान् स नलः । ‘अनिष्टाभ्यागमोत्प्रेक्षां शङ्कामाचक्षते बुधाः’ इति लक्षणात् । वियोगिनां विपदे । उदीतं उत्थितधूमकेतुम्, अशङ्कत अतर्कयदित्युत्प्रेक्षालङ्कारः ॥ ९१ ॥

**गलदिति** ॥ स नलः, गलत्परागं निर्यद्रजस्कं, भ्रमिभङ्गिभिः

तदङ्गमुद्दिश्य सुगन्धि पातुकाः शिलीमुखालीः कुसुमाद्गुणस्पृशः।
स्वचापदुर्निर्गतमार्गणभ्रमात् स्मरः स्वनन्तीरवलोक्य लज्जितः ॥९३
मरुल्ललत्पल्लवकण्टकैः क्षतं समुच्चरच्चन्दनसारसौरभम्।
स वारनारीकुचसञ्चितोपमं ददर्श मालूरफलं पचेलिमम् ॥ ९४ ॥

---

भ्रमणप्रकारैः, उपलक्षितं, पतत् भ्रश्यत्। प्रसक्तभृङ्गावलि संसक्तालिकुलं, नागकेसरं कुसुमविशेषं, मारनाराचनिघर्षणैः स्मरशरघर्षणैः स्खलन्तः लुठन्तः, ज्वलन्तश्च कणाः स्फुलिङ्गाः, यस्य तं शाणं निकषोपलमिवेत्युत्प्रेक्षा। व्यलोकयत्। 'शाणस्तु निकषः कषः' इत्यमरः ॥ ९२ ॥

**तदङ्गमिति** ॥ सुगन्धि शोभनगन्धम्। "गन्धस्य" इत्यादिना समासान्त इकारः। तदङ्गं तस्य नलस्य अङ्गमुद्दिश्य लक्षीकृत्य, गुणो गन्धादि मौर्वी च। 'गुणस्त्वावृत्तिशब्दादिज्येन्द्रियामुख्यतन्तुषु' इति वैजयन्ती। तत्स्पृशः तद्युक्ताः। "स्पृशोऽनुदके" इति क्विन्प्रत्ययः। कुसुमादपादानात् पातुकाः धावन्तीः। "लषपत-" इत्यादिना उकञ्प्रत्ययः। स्वनन्तीः ध्वनन्तीः शिलीमुखालीरलिपङ्क्तीः, बाणपङ्क्तीश्च, अवलोक्य। स्मरः स्वचापात् पौष्पात्, दुर्निर्गता विषमनिर्गताः, ये मार्गणा बाणाः, तद्भ्रमाद्धेतोः, लज्जितोऽभवत्। नूनमिति शेषः। दुर्निर्गतेषवो ह्यधिकं स्वनन्तीति प्रसिद्धम्। अत्र स्वनच्छिलीमुखेषु दुर्निर्गतमार्गणभ्रमात् भ्रान्तिमदलङ्कारः। स च शिलीमुखेति श्लेषानुप्राणितः। तदुत्थापिता चेयं स्मरस्य लज्जितत्वोत्प्रेक्षेत्यनयोरङ्गाङ्गिभावेन सङ्करः ॥ ९३ ॥

**मरुदिति** ॥ मरुता वायुना ललत्पल्लवानां चलत्किसलयानां,

**युवद्वयीचित्तनिमज्जनोचितप्रसूनशून्येतरगर्भगह्वरम् ।**
**स्मरेषुधीकृत्य धिया भयान्धया स पाटलायाः स्तबकं प्रकम्पितः ॥**
**मुनिद्रुमः कोरकितः शितिद्युतिर्वनेऽमुनाऽमन्यत सिंहिकासुतः ।**

---

कण्टकैः तीक्ष्णाग्रैरवयवैः, क्षतम् । अन्यत्र, लसद्विटनखैः क्षतमिति गम्यते । समुच्चरत् परितः प्रसर्पत्, चन्दनसारस्येव सौरभं यस्य तत् । अत एव वारनारीकुचेन वेश्यास्तनेन, सञ्चितोपमं सम्पादितसादृश्यमित्युपमालङ्कारः । 'वारस्त्री गणिका वेश्या' इत्यमरः । कुलाङ्गनासु नखक्षताद्यनौचित्याद्वारविशेषणम् । पचेलिमं स्वतः पक्वम् । "कर्म कर्तरि केलिमर उपसङ्ख्यानम्" इति पचेः केलिमच्प्रत्ययः । मालूरफलं बिल्वफलम् । 'बिल्वे शाण्डिल्यशैलूषौ मालूरश्रीफलावपि' इत्यमरः । स नलो ददर्श ॥ ९४ ॥

युवद्वयीति ॥ युवा च युवतिश्च तयोर्यूनोः, द्वयी मिथुनम् । तस्याः चित्तयोः कर्मणोः । निमज्जने । ण्यन्ताल्ल्युट् । उचितैः क्षमैः, प्रसूनैः पुष्पबाणैः, शून्येतरदशून्यं, पूर्णं गर्भगह्वरं गर्भकुहरं यस्य तम् । पाटलायाः पाटलवृक्षस्य, स्तबकं कुसुमगुच्छम्, भयान्धया भयमूढया, धिया भयजन्यभ्रान्त्येत्यर्थः । स्मरेषुधीकृत्य कामतूणीकृत्य, तथा विभ्रम्येत्यर्थः । अत एव भयात् प्रकम्पितः चकम्पे । अत्र पाटलस्तबके मदनतूणीरभ्रमात् भ्रान्तिमदलङ्कारः । "कविसम्मतसादृश्याद्विषये पिहितात्मनि । आरोप्यमाणानुभवो यत्र स भ्रान्तिमान्मतः ॥" इति लक्षणात् ॥ ९५ ॥

मुनिद्रुम इति ॥ अमुना नलेन, वने, कोरकितः सञ्जातकोरकः,

**तमिस्रपक्षत्रुटिकूटभक्षितं कलाकलापं किल वैधवं वमन् ॥ ९६ ॥**
**पुरो हठाक्षिप्ततुषारपाण्डरच्छदावृतेर्वीरुधि [1]बद्धविभ्रमाः ।**
**मिलन्निमीलं विदधुर्विलोकिता नभस्वतस्तं कुसुमेषु केलयः ॥ ९७ ॥**

---

शितिद्युतिः पत्रेषु कृष्णच्छविः, मुनिद्रुमः अगस्त्यवृक्षः, तमिस्रपक्षे त्रुटिकूटेन क्षयव्याजेन, भक्षितम् अभक्षितत्वे कुतः क्षय इति भावः । अत्र कूटशब्देन क्षयापह्नवेन भक्षणारोपादपह्नवभेदः । वैधवं चन्द्रसम्बन्धि । 'विधुः सुधांशुः शुभ्रांशुः' इत्यमरः । कलाकलापं कलासमूहं, वमन् उद्गिरन्, सिंहिकायाः सुतो राहुः, अमन्यत किल । अत्र कोरकित-शितिद्युतित्वाभ्यां मुनिद्रुमस्येन्दुकलाकलापवमनविशिष्टराहुत्वोत्प्रेक्षा । सा चोक्तापह्नवोत्थापितेति सङ्करः ॥ ९६ ॥

**पुर इति** ॥ पुरोऽग्रे, हठाज्झटित्याक्षिप्ता आकृष्टा, तुषारेण हिमेन, पाण्डराणां छदानां पत्राणां, तुषारवत्पाण्डरस्य छदस्याच्छादकस्य वस्त्रस्य च, आवृतिः आवरणम् येन तस्य नभस्वतः वायोः, वीरुधि लतायाम् । बद्धा अनुबद्धाः, विभ्रमा भ्रमणानि विलासाश्च यासु ताः । कुसुमेषु विषये केलयः क्रीडाः । कुसुमेषुकेलयः कामक्रीडाश्च । विलो-किताः सत्यः तं नलम् । मिलन्ती सजन्ती निमीला मीलनं यस्य तम् । विदधुः, निमीलिताक्षं चक्रुरित्यर्थः । विरहिणामुद्दीपकदर्शनस्य दुस्सहदुःखहेतुत्वादन्यत्र 'नेक्षेतार्कं न नग्नां स्त्रीं न च संसक्तमैथुनम्' इति निषेधादिति भावः । अत्र प्रस्तुतनभस्वद्विशेषणसामर्थ्यादप्रस्तुत-कामुकविरहप्रतीतेः समासोक्तिरलङ्कारः ॥ ९७ ॥

---

[1] 'नद्धविभ्रमाः' इति क्वचित् पाठः ।

